अव ॥ दशरथेना न पत्यतोदन्तं श्रुत्वा गुरुर्वशिष्ठ स्तं समाधत्ते :-

रे वा मरुन्निचय सेवा प्रफुल्ल नळिनीवा मलात्मधिषण
स्सोऽवो च दात्म गुरुदेवं प्रणम्य निज भावं वसिष्ठयमिनम् ॥
प्रोवाच तं स च सुतावाप्ति मेष्यसि कृपावार्धि मे हि शरणम्
देवं हरिं सवन मात्रासमस्य पितृ भावाप्तये कुरु हितम् ॥

---

खण्ड ॥ रेवा मरुन्निचय सेवा प्रफुल्ल नळिनीव, अमलात्मधिषणः, सः, आत्मगुरुदेवम्, वशिष्ठयमिनम् प्रणम्य, निजभावम् अवोचत् । स च, तम्, प्रोवाच, सुतावाप्तिम्, एष्यसि, कृपावार्धिम्, देवं, हरिम्, शरणम्, एहि, पितृभावाप्तये, अस्य, आवासम्, हितम्, सवनम्, कुरु ।

व्याख्या ॥ रेवेति ॥ रेवायाः=नर्मदानद्याः, यः, मरुतां निचयः, तस्य सेवया, प्रफुल्ला च सा नळिनी - नि ॥ पद्मिनी योषिदन्तरे । अब्जेऽब्जिन्यां सरस्याञ्च, इति हैमकोशा न्नळिनी शब्दोऽब्ज वाची । सेव स्थिता, आत्मनः, धिषणा=बुद्धिः, अमला आत्मधिषणा यस्य सःतथोक्तस्सन्, सः, दशरथः, आत्मनः=स्वस्य, गुरुदेवम्, वशिष्ठयमिनम्=वशिष्ठमहर्षिम्, प्रणम्य =अभिवाद्य,निजभावम्=आत्मनोऽभि प्रायम्, अनपत्यता विषयक विचार रूपमिति भावः-अवोचत्=जगाद । स च वसिष्ठश्च, तम्, दशरथम्, प्रोवाच= जगाद । हे ! विभो! सुतानाम्, अवाप्तिम्=प्राप्तिम्, एष्यसि=प्राप्स्यसि । कृपायाः वार्धिम् = दयासमुद्रम् - देवं, हरिम्=श्रीमहाविष्णुम् । शरणम्= रक्षणम्, एहि=गच्छ । पितुर्भावः=पितृभावः । तस्य, आप्तये=प्राप्तये, अस्य =भगवतः, आवासम्=निलयम्-यज्ञो वै विष्णुः; यज्ञ एवान्ततः प्रतितिष्ठति - इति श्रुतेः । हितम्, च, अभीष्ट पुत्र प्राप्ति जनकत्वात् सवनं= यागम्, कुरु=आचरेति यावत् ।

भावः ॥ स दशरथः पण्डितोक्त वाक्यं निशम्य सन्तुष्टान्त रङ्गस्सन्नात्मगुरुदेवं प्रणम्यात्मनोऽभि प्राय मवोचत - तत स्स गुरुर्हे! नृप! तव तु पितृ भावाप्ति रस्ति - न सन्देहः - दया विधेयं - विधेय जगत्त्रितयं हरिं भज - तच्छ्री हरे रावास भूत पुत्त्रकामेष्टिम् कुर्विति ।

---

विशे ॥ विश्वमेवेदम् पुरुषः-तद्विश्व मुप जीवति-अपि च, आध्यात्मिकतन्त्रे च-तच्छब्देन परमात्मोच्यते - अतस्तच्छब्द वाच्यः परमात्मा वैकुण्ठनाथः ।

अव ॥ वशिष्ठेन प्रेरितस्य दशरथस्य यज्ञ निर्वर्तनं भगवदनुग्रहावाप्तिश्चोपवर्ण्यते-

न्यङ्कु प्रपावन पदाङ्कां भुवं त्वथ विशङ्कं विविच्य स मुनि
स्त ङ्कोसलेश मकलङ्कं विधाय तनुजाङ्कं सु यज्ञ मनयत् ।
स ङ्कर्षणो मुद मपङ्केन चाप्य बहुळोङ्कार वेद विधिना
ता ङ्कोसलेन्द्र निज सङ्कल्पसिद्धि मवि शङ्कं ददौ मख पतिः ॥

खण्डा ॥ अथ, सः मुनिः, न्यंकु प्रपावन पदांकां, भुवं, तु, विविच्य तम्, कोसलेशम्, अकलंकम्, विधाय, विशंकं यथा तथा, तनुजांकं, सु यज्ञं, अनयत् - मखपतिः, संकर्षणः, अपंकेन, बहुळोंकार वेदविधिना, मुदम्, आप्य, तां, कोसलेन्द्र निजसंकल्प सिद्धिम्, अविशंकं यथा तथा, ददौ ।

व्या ॥ न्यङ्किति ॥ अथ=यज्ञं करिष्यामीति दशरथ निश्चयानंतरं, सः, मुनिः=वशिष्ठः, प्रकर्षेण पावनं=प्रपावनम्, प्रपावनञ्च तत्पदञ्च प्रपावनपदम् - न्यङ्कोः=कृष्णसारस्य, प्रपावन पदम्-तस्य अंकः=चिह्नम् यस्यान्तादृशं भुवम्=भूमिम्- नि ॥ भूर्भूमिरचलानंते त्यमरः । विविच्य=विचार्य, श्लो ॥ कृष्ण सारस्तु चरति मृगो यत्र स्व भावतः स देशो यज्ञियः इति स्मृतेः । तम्, कोसलेशम्=दशरथम्, अकलंकम्=अघमर्षणादि सूक्तिभिः - पापरहितम्, विधाय=कृत्वा, विशंकं यथा तथा=शंकाविरहितं यथा तथा, तनुजाः अंकः=चिह्नं यस्मिन्तम्, सुयज्ञम्=शोभनयागम्, अनयत् = कारयामासेति भावः - नीञः द्विकर्मकत्वात्प्रयोगः-मखपतिः=यज्ञपतिः, संकर्षणः =श्रीमहाविष्णुः - श्रीमहाविष्णुरेव याग प्रभुरिति श्रुति स्मृति पुराणादिषु प्रसिद्धः - अपंकेन=प्रायश्चित्ताद्यभावादमलेन, हुळं ओङ्कारयुक्तो यो वेदविधिस्तेन-वेदोक्त विधिनेति भावः-मुदम्=मोदम्, आप्य=प्राप्य । ताम्= पूर्वोक्ताम्, - कोसलेन्द्रस्य=दशरथस्य, निजो यस्सङ्कल्पः तस्य, सिद्धिम्= साफल्यम्, अविशङ्कं=सन्देह रहितं यथा तथा । ददौ=प्रायच्छत् ।

भावः ॥ वशिष्ठोऽपि यागोपयोगिदेशं विनिश्चित्य दशरथेश मघमर्पणादिनाऽकलंकं कृत्वा याग मकारयत् - तेन च प्रीतो विष्णु स्तस्मै पुत्त्रलाभरूप स्वसंकल्प सिद्धिञ्च ददौ ।

विशे ॥ अस्मिन् श्लोके प्रथम पादस्थ नळिनी पदगतौपम्यस्य तदुत्तरवर्ति समासैक देशभूत 'अमल' शब्देन सह क्रियमाणान्वयस्य" सरसिज वनी संतानाना मरुन्तुद शेखराः" (मूक पंचाशत्-२६ श्लो ॥) इतिवन्निर्वाह्यः ।

अव ॥ यज्ञ प्रसादम् कौसल्या कैकेयीभ्यां दशरथो ददाविति व्याख्यायते –

भर्गं प्रणम्य सुत वर्ग प्रदम् सवन मार्गोदितश्चरु मिनो
दुर्गे महिम्नि सुत सर्गक्षमे स्वजनि वर्गोत्तमे दशरथः ।
दौर्गत्यहेति मपवर्गस्य हेतु मरिदुर्गो ददौ; चरु मुभे
सर्गप्रदं तनय सर्गोत्सुके विहित मार्गेण ते जगृहतुः ॥

---

खण्डा ॥ अरिदुर्गः, दशरथः, इनः, भर्गं प्रणम्य, सुतवर्गप्रदम्,, सवन मार्गोदितम्, दौर्गत्य हेतिम्, अपवर्गस्य हेतुम्, चरुम्, महिम्नि, दुर्गे, सुतसर्गे, क्षमे, स्वजनिवर्गोत्तमे, ददौ । तनय सर्गोत्सुके - ते - उभे, सर्गप्रदमे, चरुम्-विहित मार्गेण, जगृहतुः ॥

व्या ॥ भर्गमिति ॥ अरिभिः=शत्रुभिः, दुःखेनापि गन्तुम्=प्राप्तु मशक्यः =अरिदुर्गः, दशरथः, इनः=राजा, भर्गम्=शर्वम्, स्वकुलदैवमिति यावत्-नि ॥ हरस्स्मर हरो भर्ग स्त्र्यंबक स्त्रिपुरान्तकः–इत्यमरः-प्रणम्य = अभिवाद्य, सुतानां वर्गः=समूहः, तं प्रददातीति तथोक्तम्, सवन मार्गेण=अध्वरोपायेन, उदितम्=प्रादुर्भूतम् - दुर्गतेर्भावः दौर्गत्यम्, तस्य, हेतिं = विच्छेदन-साधनम्,अपवर्गस्य=मोक्षस्य, हेतुम्=कारणम्, निष्कामनया कृतस्येष्ट्यादेः फलं ज्ञानोत्पत्ति पूर्वका विद्या विनाश एवेत्यर्थः–चरुम्=होमावशिष्टपायसान्नम्-महिम्नि=प्राभवे, दुर्गे=अनन्य सामान्य महिमवत्याविति यावत्, सुतसर्गे=पुत्र प्रसूतौ, क्षमे=समर्थे, स्वस्य, जनीनां=पत्नीनां–जनि घसिभ्यामिणिद्यौ–णादिक सूत्रेण जनि शब्दो निष्पन्नः । नि ॥ जनी स्नुषा वनितयोः – इति हैमः – तथापि सू ॥ कृदिकारादक्तिनः – इति ङीषः वैकल्पिकत्वात् 'जनिं' रप्यस्ति – वर्गे=समूहे – तिसृष्वित्युक्तत्वात् । उत्तमे=द्वे पत्न्यौ प्रति - नि ॥ उत्तमा वरवर्णिनीत्यमरः – ददौ=प्रार्पयत् - तनयानां, सर्गे=प्रसूतौ - उत्सुके=उत्कण्ठिते । ते-उभे=कौसल्या कैकेय्यौ–सर्गप्रदम्=पुत्रोत्पत्तिहेतुकं तम्, चरुम् विहित मार्गेण=शास्त्रचोदितेन विधिना, जगृहतुः=स्वीचक्रतुः ।

भावः ॥ दशरथेश्वर स्तदध्वरोपात्त चरुमादायेश्वरम्प्रणम्य निज वाञ्छा फलप्रदन्तं यज्ञेश्वर प्रसादं द्वाभ्यां सन्निधिष्ठाभ्यां पत्नीभ्यां ददौ-ते द्वे कौसल्या कैकेय्यौ संतुष्टान्त रंगेणाभ्यहिष्टाम् च ।

अव ॥ सुमित्राभ्यर्थनया कौसल्या कैकेय्यौ स्व भागयो रर्धमर्धं भागद्वयं ददतुः-

**गोत्राभि वृद्धि करपात्रश्चरुं ललित गात्राऽणु मध्य कलिता**
**स्तोत्रं विधाय निज पुत्त्रोदयाय च सुमित्रा प्ययाच दथ ते ।**
**मैत्री वशा त्तनयदात्रं चरुं नृप कळत्रे यदा प्रददतुः**
**पुत्रार्थिनी मनुज सुत्राम जामि रति मात्रात्तमु त्तमघसत् ॥**

---

खण्डा ॥ अथ, ललितगात्रा, अणु मध्य कलिता, सुमित्रापि, गोत्राभिवृद्धि करपात्रं, चरुम्, निजपुत्त्रोदयाय, ते, स्तोत्रं, विधाय - अयाचत् - मैत्रीवशात्-तनय दात्रम्, चरुम्, नृप कळत्रे, यदा, प्रददतुः, तदा, अतिमात्रात्तमुत्, मनुजसुत्राम जामिः, पुत्रार्थिनी सती, तम्, अघसत् :-

व्याख्या ॥ गोत्रेति ॥ अथ=ततः, ललितगात्रा=सुन्दराङ्गी, अंगगात्र कण्ठेभ्यो वक्तव्य मिति वात्र ङीष् - अणुरिव सूक्ष्मम् च तन्मध्यञ्च= अणुमध्यं, तेन, कलिता=युक्ता - सुमित्रापि=तन्नाम्नी दशरथ पत्न्यपि - गोत्रस्य अभिवृद्धि करपात्रम्, चरुम्=पायसान्नम्-निजस्य=आत्मनः, पुत्रोदयाय=पुत्र जननाय, ते-कौसल्या कैकेय्यौ - द्वितीया-स्तोत्रं = नुतिम्, विधाय=कृत्वा, अयाचत् = अभ्यर्थयामास। (डु)याचृ - इति धातोः द्विकर्मकत्वा त्प्रयोगः। मैत्री वशात् = स्नेहकारणात्। तनयान् ददातीति तथोक्तम् - दा ञ् धातोः - सू ॥ सर्वधातुभ्यष्ट्रन् - इत्यौणादिक सूत्रेण 'दात्र' इति रूपसिद्धिः - चरुम्, नृपकळत्रे=दशरथ पत्न्यौ - यदा=यस्मिन्समये, प्रददतुः=प्रयच्छतुः, तदा-तदनुपदमेव-अतिमात्रं आत्ता मुत् यया सा=अति मात्रात्तमुत् सती मनुजानां सुत्रामा=इन्द्रः - मनुज सुत्रामः=प्रभु दशरथः, तस्य जामिः=कुलस्त्री-सुमित्रा-नि ॥ जामिः स्वसृ कुल स्त्रियो - रित्यमरः। पुत्रार्थिनी सती=पुत्राभिलाषवती सती-तम्=पायसान्नम्, अघसत्=बुभुजे-अदोघस्ला देशः।

---

विशे ॥ श्लोऽकेस्मिन् वधूविशेषणानां चरु विशेषणानाञ्च साभिप्रायत्वात् परिकरालंकारः ॥ श्लो ॥ **अलङ्कारः परिकर स्साभि प्राये विशेषणे ॥** इति लक्षणात् ॥

अव ॥ संप्रति दशरथ पत्नी गर्भे श्रीपत्यंश प्रवेशः कथ्यते --

**देवेन यज्ञ पतिना वाप्त मात्रुचित भावास्तुता मृगदृश**
**श्श्रीवासुदेव कृपयाऽवापुरर्भक सुखावास गर्भ ममलम् ।**
**यो वा समस्त मुनिसेवास्पदो भवसुदा वाग्नि मेजयति स**
**श्रीवार्धिजापति रथावासु माप रघुदेवान्वयेऽति विमले ॥**

---

खण्डा ॥ देवेन, यज्ञपतिना, अवाप्त मात्रुचित भावाः, ताः, मृगदृशः, तु, श्रीवासुदेव कृपया, अमलम्, अर्भक सुखा वासगर्भम्, अवापुः-अथ, यः, समस्त मुनिसेवास्पदः, भव सुदावाग्निम्, एजयति, सः, श्रीवार्धिजा पतिः, अति विमले, रघुदेवान्वये - आवासम् - आप ।

व्याख्या ॥ देवेनेति ॥ देवेन=भगवता, यज्ञपतिना=श्रीमहाविष्णुना, मातृणां उचिताः भावाः मात्रुचित भावाः-अवाप्ताः मात्रुचित भावाः याभिस्ता स्तथोक्ताः - ताः=पूर्वोक्ताः - मृग दृशस्तु=कौसल्या कैकेयी सुमित्रास्तु - श्रीवासुदेव कृपया=परमात्मनः करुणया - अमलम्=अकळंकम् - अर्भकाणां सुखावासः तदुचितश्चासौ गर्भश्चेति लुप्त मध्यम पदः-तम्, अवापुः - अथ यः, समस्त मुनीनां सेवायाः आस्पदः=स्थान भूतः, भव एव=संसार एव, सुदावाग्निः, तम्-एजयति=कम्पयति नाशयतीत्यर्थः । एजृकंपन इति परस्मै पदम्-सः, श्रीवार्धिजा पतिः=अब्धिकन्याधिपः-श्रीमहा विष्णुरिति यावत्-अतिविमले=अतिपवित्रे । श्लो ॥ सोऽहमा जन्मशुद्धाना, मित्यादिना रघु-वंशस्य पवित्रत्वं कालिदासे नोक्तम्-आवासम्=निवासम्-आप=अवाप ।

भावः ॥ यज्ञ पति रूप श्रीमहाविष्णो स्सत्कृपया प्राप्त मात्रुचित-भावास्ता दशरथ स्त्रि यस्तिस्र अर्भकावासोचितं गर्भम् ददुः-सः परमात्माऽपि तासा मति विमल गर्भावास सुख मनुबभूव ।

---

भावः ॥ ततो दशरथ द्वितीय द्वितीया सुमित्रापि ते कौसल्या कैकेय्या वुपसृत्य स्वस्यापि तनयप्रदम् चरुम्- 'दत्त' मिति ययाचे - (अमृत सम्मिते) ते तस्यै स्व स्व भागयो रेकैक मर्धं ददतुः-मिळित्वा भागद्वय मासीदात्मन-इति परम प्रीत्या सापि तम्बुभुजे ॥

अव ॥ अथ कौसल्या गर्भग आदिदेव इति वशिष्ठो द्घोधित पौरानन्द प्रकारः

**वन्दारु भक्त जन मन्दारको जलद सन्देह कृत्तनु रुचि**
**श्छन्दोमयो निखिल बृन्दारकादि मुनिबृन्दैः स्सुपूजित तनुः ।**
**मन्दारमाल्य चय सन्दानितो जनि समन्दांशु शोभित कुले**
**न न्दं सदैत्य मदभिन्दात्करिष्यति ननन्दुर्भुवी त्थ मखिलाः ॥**

खण्डा ॥ वंदारु भक्तजन मंदारकः, जलद संदेह कृत्तनु रुचिः, छन्दोमयः, निखिल बृन्दारकादि मुनि बृन्दैः, सुपूजित तनुः, मंदार माल्यचय-सन्दानितः, सः, अमन्दांशु शोभित कुले, जनिं, करिष्यति; दैत्य मदभिन्दात्, नन्दं, करिष्यति - इत्थम् - भुवि, अखिलाः, ननन्दुः :-

व्या ॥ वन्दार्विति ॥ वन्दार वश्च ते भक्तजनाश्चेति कर्मधारयः - तेषां - मन्दारकः कल्पवृक्ष सदृक्ष इत्यर्थः - 'वदि अभिवादनस्तुत्यो' रिति धातो 'श्शृवन्द्योरारु' रित्यारु प्रत्ययः-मन्दारस्य स्वार्थे कः - तनोः रुचिः= तनुरुचिः=देहकान्तिः - जलद इति=मेघ इति सन्देहं करोतीति = जलद-सन्देह कृत् - तादृशी तनुरुचिर्यस्य सः तथोक्तः - नीलमेघाभ इति यावत् - छन्दोमयः-निखिल बृन्दारकाः=सर्वदेवताः तैः, आदिमुनीनां=सनकादि-महर्षीणां, बृन्दैश्च, सुष्ठु पूजिता तनु र्यस्य सः तथोक्तः-मन्दाराणां-माल्य-चयः=मालिकानिवहः तेन, सन्दानितः=बद्धः, नि ॥ बद्धे सन्दानितम्मूत-म्मुद्रितं सन्दितम् सित मित्यमरः - मन्दार मालालंकृत इति यावत् - सः= श्रीमहाविष्णुः-अमन्दाः अंशवः यस्य सः; अमन्दांशुः=सूर्यः, तेन, शोभित-कुले=प्रकाशित वंशे, वैवस्वत वंश इति यावत् - जनिम्=उत्पत्तिम् - नि ॥ जनुर्जनन जन्मानि जनिरुत्पत्तिरुद्भव इत्यमरः - करिष्यति - दैत्यानां=दुष्ट-रक्षसाम्, मदभिन्दात्=मदभेदनात्, नन्दम्=प्रजानन्दम्, करिष्यति= तनिष्यति - इत्थम् =एवं प्रकारेण, भुवि=भूमौ - अखिलाः=सर्वे, ननन्दुः =मुमुदिरे-एकस्मिन्नहन्यपि तादृश श्रीरामराज्ये प्रजा भवितास्म इत्याशयेन ।

विशे ॥ अत्र परस्पर विनिर्मलत्वादि गुणाश्रितयोर्द्वयो श्श्रीराम गर्भा-वासयोर्भूषण भूष्य भावापन्नत्व मस्तीति तस्य व्यंग्यत्वम् ।

अव ॥ दशरथ इश्रीरामस्स्व तनयो भविष्यतीति मुदा कालं यापयतीति विव्रियते

स्यादीशितु र्जनन मादित्य वंश इति वादं निशम्य नृपतिः
क्वेदन्तपो मम सुतो दन्त इत्यधिक मोदं ययौ दशरथः ।
वेदागमोक्त धन भूदान तोऽखिल जनामोद मुद्ग मयिता
श्रीदोरुजन्म विषयो दन्त संश्रवण वादै स्सकाल मनयत् ॥

---

खण्डा ॥ ईशितुः, जननं, आदित्य वंशे, स्यात्, इति, वादं, नृपतिः, निशम्य, सुतोदन्ते, इदं, मम तपः, क्व, इति, दशरथः, अतिमोदम्, ययौ, सः, वेदागमोक्त धन भू दानतः, अखिल जनामोदं, उद्गमयिता, श्रीदोरु-जन्म विषयो दन्त संश्रवण वादैः, कालं, च, अनयत् ॥

व्याख्या ॥ स्यादिति ॥ ईशितुः = जगदीश्वरस्य जननम् = जनिः, आदित्य वंशे=सूर्य वंशे - स्यात्=भूयात् - इति=एवं प्रकारं, वादम्=जन-वाक्यं, नृपतिः = राजा, निशम्य = श्रुत्वा, सुतोदन्ते=पुत्र विषयक वार्ता-विषये, अत्र वैषयिक सप्तमी - इदं=परात्परेण सुतवत्त्व रूपम् । मम - तपः, क्व-इति=एवं, दशरथः, अतिमोदम्=अधिक सन्तोषं, ययौ=प्राप्तवान्, सः =दशरथः, वेदेषु, आगमेषु=शास्त्रेषु, उक्तम् यद्धन भू दानादिकम्-तद्दानतः, अखिल जनामोदम्=सर्वजन सन्तोषम्, उद्गमयिता=गमयन्, श्रि यन्ददातीति =श्रीदः, तस्य, उरु च तज्जन्म चेति समासः-तद्विषयः, य उदन्तः, तस्य, संश्रवणैः, वादैः; संलापैश्च, कालञ्च, अनयत्=यापयामासे त्यर्थः ॥

---

भावः ॥ भक्तजन मन्दारो जलदाभरुचिर्वेद स्वरूप स्सकल देवर्षि-संघैश्च सुपूजितो मन्दारमालालंकृत स्स परमात्मा सूर्यवंशेऽद्य संजनिष्यति - दनुज विनाशं च करिष्यतीति ननन्दुर्जनाः ।

विशे ॥ अत्र श्रीमहाविष्णु र्देवलोके - आवासं नाकरोदिति हेतुना तेषाम्मरुतां तद्विरहः दुःख सम्पादकोऽपि पौराणा मानन्ददायी त्युपवर्णना-दविवक्षितस्य श्रीरामचन्द्र जननौत्कृष्ट्यस्य भूलोकवासिना मानन्दावह त्वद्वारा व्यज्यमान त्वादत्रा विवक्षितान्य परवाच्य ध्वनिः ॥



धीरासु तासु प्रथमा रामदेव म.रिवीरापहं प्रसुषुवे।

अत्र ॥ अथ श्रीरामादीना मवतार उपपाद्यते :-

धीरासु तासु प्रथमा रामदेवमरिवीरापहं सुगुणिनम्
स्मेरानना भरतवीरं त्वजीजनदुदारन्तु केकय सुता ।
नारी च लक्ष्मण मधीराऽपरा लवणहारंत्वसूत नृपतिः
स्मेरो द्विजन्मततिमाराध्य दानजलवाराशि पूरमकरोत् ॥

---

खण्डा ॥ तासु, धीरासु, प्रथमा, अरिवीरापहं, सुगुणिनम्, रामदेवं; स्मेरानना, केकयसुता, तु, उदारं, भरतवीरं, अजीजनत्-अपरा-अधीरा, नारी, तु, लक्ष्मणं, लवणहारं, च, असूत, स्मेरः, नृपतिः, द्विजन्मततिम्, आराध्य, दानजलवाराशिपूरं, अकरोत् ॥

व्याख्या ॥ धीरास्विति ॥ तासु=पूर्वोक्तासु, धीरासु = सुतप्रसव समर्थासु तिसृषु, प्रथमा = ज्येष्ठा कौसल्या, अरीणां वीरानपहन्तीति तथोक्तम्, सुगुणिनम् = सुगुणवन्तम्, रामदेवम्, स्मेरं आननं यस्या स्सा स्मेरानना-केकय सुता तु = कैकेयी तु, उदारं = औदार्यवन्तम्, भरत वीरं= वीरं भरत मिति विशेष्य पूर्वपद कर्मधारयः, अजीजनत् = असूत - अपरा = अन्या, उदारा, नारी तु=सुमित्रा नाम्नी तु - लमक्ष्णं, लवण नामा सुर संहारं, शत्रुघ्न ञ्च- असूत = जनयामास । स्मेरः = संतुष्टान्तरंगत्वात्, नृपतिः = दशरथ राजः- द्वि जन्मततिं = ब्राह्मण बृन्दम्, आराध्य = संपूज्य, दान जलेन वा राशेः पूरं= पूरणमपि, अकरोत् = चकार ॥

---

भावः ॥ सूर्यवंशे श्रीमहाविष्णु रिदानीं जनिष्यतिः अतो मम भाग्यममेय मिति दशरथस्तुष्ट स्सन्वेदोक्ताखिल भूदानादिना सर्वं जना नानन्दयन्परमेशावतरणस्मरणेन च काल मयापयत् ॥

विशे ॥ अत्र भाव्यर्थ मननेन दशरथ स्सन्तुष्टो बभूवेति भाविकालङ्कारः- श्लो ॥ भाविकं भूत भाव्यर्थ वर्णनञ्च मतं क्वचि दिति लक्षणात्-यद्वा दशरथस्य सन्तोष समृद्धि मत्त्ववर्णना दुदात्तालङ्कारो वा स्यात्-श्लो ॥ उदात्त-मृद्धेश्चरित मिति लक्षणात् ॥

अव ॥ अधुना पुत्रोत्साहवतो दशरथस्य मानसिक प्रवृत्तिर्व्याख्यायते :–

**मन्ये सुजीवित मि हान्येषु सत्सु बहुधन्योऽस्म्यहं गुणवताम्**
**मान्यास्सुता इति च मे न्यायतो भवति विन्यास ऊर्ध्वभुवने ।**
**सन्यासिनः किल यमन्यानुपेक्ष्य हृदि विन्यस्य धन्य चरिताः**
**पुण्येन सोऽभव दगण्येन मे जलधि कन्यापतिर्हि तनयः ॥**

---

खण्डा ॥ सन्यासिनः, अन्यान्, उपेक्ष्य, यं, किल, हृदि, विन्यस्य, धन्य चरिताः, सः, जलधिकन्या पतिः, अगण्येन, पुण्येन, मे, तनयः, अभवत्- इह - अन्येषु - सत्सु, सुजीवितम्, मन्ये, गुणवताम्, अहम् , धन्यः, अस्मि- सुताः, मान्याः-इति - मे, न्यायतः, ऊर्ध्वभुवने, विन्यासः, भवति-हि :–

व्याख्या ॥ मन्य इति ॥ सन्यासिनः=त्यक्त लोक संगाः कर्मन्दिनः, अन्यान् = इतरान्, कामानिति शेषः - उपेक्ष्य, यं=परमात्मानं - किलेति प्रसिद्धार्थे - हृदि=हृदये, विन्यस्य=निधाय, धन्य चरिताः; भवन्तीति शेषः- सः, जलधि कन्याधिपतिः = लक्ष्मीनाथः, अगण्येन; पुण्येन, मे = मम- तनयः=पुत्रः, अभवत्=बभूव- इह=लोके, अन्येषु=पुत्रवत्स्वितरेषु, सत्सु =सत्पुरुषेषु, सु जीवितम्=आत्मानमिति शेषः, मन्ये-गुणवताम्=सुगुणिना- म्मध्ये - अहम् , धन्यः, अस्मि=भवामि - सुताः; मान्याः=लोकपूज्या इति हेतुना, मे=मम, न्यायतः=न्याय्येन, ऊर्ध्वभुवने = पुण्यलोके, विन्यासः; निवास इति भावः - भवति; सुपुत्रो मोक्षकारकः - इति स्मृतेः, दशरथ एवं तुतोषेत्यर्थः ॥

भाव ॥ योऽयं परमात्मा सन्यासिभि र्योगिभि र्बहुधा संसेव्यते स एव श्रीरामचन्द्र रूपेण मम पुत्रोऽभवदिदानी महम्पितृभ्यः पिण्ड प्रदाताऽभवमि- ति दशरथो मनुते स्म ॥

---

भावः ॥ अथ कौसल्या श्रीरामम्, कैकेयी भरतम्, सुमित्रा लक्ष्मण शत्रुघ्नावसुवत-तदा दशरथोऽपि नन्दनानन्देन भूसुरान्दानादिना तर्पयामास ।

विशे ॥ अत्र दान जलस्य वाराशि सम्बंधा भावेऽप्यतिशयोक्तिद्योत- नाय तत्सम्बन्धोक्ते रतिशयोक्त्यलङ्कारस्य गम्यत्वे ऽपि समृद्धि मद्वस्तु वर्णना दुदात्तालंकारः - तल्लक्षणन्तूक्तमेव ॥

अव ॥ दशरथेन वशिष्ठाय पुत्त्रोत्पत्ति रावेद्यते :–

हित्वाऽन्यसक्ति मपि कृत्वाप्रियम्मनसि मत्वा गुरोर्गुरु कृपाम्
दत्वा च दान मथ गत्वा वशिष्ठ मति सत्त्वं प्रणम्य विनयी ।
तत्त्वं विविच्य सुतवत्त्वन्त्ववोचदरि सत्त्वापहा दशरथ
श्श्रुत्वा वच स्तदनु मत्वा हरिं भुवि जनित्वा स्थितं समुमुदे ॥

खण्डा ॥ अरिसत्त्वापहा, दशरथः, अन्यसक्तिम्, अपि, हित्वा, मनसि, प्रियं, कृत्वा, गुरोः, गुरुकृपाम् - मत्वा, दानम्, च, दत्वा, अथ, अतिसत्त्वम्, वशिष्ठम्, गत्वा, विनयीसन्, प्रणम्य, च, तत्त्वम् - विविच्य, सुतवत्त्वम्, तु, अवोचत्, तदनु, सः, वचः, श्रुत्वा, हरिम्, भुवि, जनित्वा, स्थितं, मत्वा, मुमुदे ।

व्याख्या ॥ हित्वेति ॥ अरीणाम्=शतृणां, सत्त्वं=बलं, अपहन्तीति, अरिसत्त्वापहा = शत्रु बलनाशकः, दशरथः, नि ॥ सत्त्वं गुणे पिशाचादौ बले द्रव्य स्वभावयोः । आत्मत्व व्यवसायासु वित्तेष्व स्त्रीषु जंतुषु- इति मेदिनी - अन्येषु = राज कार्येषु-सक्तिम् = आसक्तिम्, अपि, हित्वा = त्यक्त्वा, मनसि = हृदये - प्रियं = पुत्त्रप्रेम - कृत्वा = विधाय, गुरोः = वसिष्ठस्य, गुरु कृपाम् = घन करुणाम्, मत्वा = मनसि चिन्तयित्वा, दानञ्च - सकल दानानीति जातावेकवचनम् - दत्वा = प्रदाय, अथ = ततः, अति सत्त्वम् = अत्यन्त सत्त्ववन्तम् = वसिष्ठम्, महर्षिंप्रति, गत्वा = प्राप्य, विनयी सन् = विनीतस्सन्, प्रणम्य = अभिवाद्य, च, तत्त्वम् = यथार्थ्यम् - विविच्य = विवेचनपूर्वकं कथयित्वे त्यर्थः । सुतः मे अस्तीत्यर्थे मतु ब्त्वौ = सुतवत्त्वम्=पुत्त्रवत्त्वञ्च, अवोचत्=अवदत् - तदनु = अनुपदम् - सः वसिष्ठः, वचः=दशरथोक्त सुतवत्त्वरूपवाक्यम् । श्रुत्वा, हरिम्=

---

विशे ॥ अत्र श्लोके पूर्वार्धोक्त स्वात्म तृप्ति प्रकाशक वाक्यस्योत्तरार्थगताभिप्राय हेतुकत्वेनोपवर्णनात्काव्यलिङ्गालङ्कारः ॥ श्लो ॥ हेतोर्वाक्य पदार्थत्वे काव्य लिङ्गमुदाहृत मिति लक्षणात् ॥

अत्र ॥ विष्णु विरहाऽसहिष्णूनां स्वर्गिगा मवस्था निरूप्यते :—

**धिग्धामनोऽसुखविदिग्धा वयन्तु भुवि दुग्धाब्धिशायिजनना**
**न्मुग्धाऽद्य भूरति विदग्धा नरास्सलिल मुग्धामधाम विभवात् ।**
**स्निग्धालकानृपति मुग्धास्सुपुण्य परिदिग्धात्मिका दशरथो**
**दग्धात्ययश्शिशु विदग्धाटनै रिति च मुग्धा बभूवु रमराः ॥**

---

खण्डा ॥ नः, धाम, धिक्, भुवि, दुग्धाब्धि शायि जननात्, वयम्, तु, असुखविदिग्धाः, अद्य, भूः, सलिलमुग्धाम धाम विभवात्, मुग्धाः नराः, अतिविदग्धाः, स्निग्धालकाः, नृपति मुग्धाः, सु पुण्य परिदिग्धात्मिकाः, दशरथश्च, शिशु विदग्धाटनैः, दग्धात्ययः, इति, अमराः, मुग्धाः, बभूवुः ॥

व्याख्या ॥ धिगिति ॥ नः = अस्माकम्, धाम = स्थानं, धिक् = गर्ह्यम् - नि ॥ धिङ् निर्भर्त्सन निंदयो - रित्यमरः - भुवि = भूलोके, दुग्धाब्धौ शेत इति = दुग्धाब्धिशायी–ताच्छील्यार्थे इनि प्रत्ययः - तस्य, जननात् = वैकुंटस्य प्रादुर्भावात् - वयन्तु, असुखेन = सुखाभावेन, विदिग्धाः = संगताः - अद्य = इदानीं, भूः = भूमिः–सलिलं मुञ्चन्तीति सलिलमुचः - तेषां धामेव, धाम = तेजसः, यस्य सः - तस्य - धाम्नः = तेजः विभवात् = वैभवात् - मेघ सन्निभ कान्ते श्श्रीरामस्य तेजो रूप भाग्य विभवात् - नि ॥ धाम शक्तौ प्रभावेच तेजोमन्दिर जन्मस्विति विश्वः - मुग्धा = सुन्दरा - अभवदिति शेषः - नि ॥ मुग्ध सुन्दर मूढयो रिति मेदिनी- नराः = मानवाः-

---

श्रीमहाविष्णुम् - भुवि = भूमौ, जनित्वा = आविर्भूय-स्थितम् = तिष्ठन्तम्- मत्वा - मुमुदे = जहर्ष ॥

भाव ॥ दशरथः पुत्र जननानन्तरं गुरु कृपाले लेशेनेद म्भाग्य- मात मित्यन्य विषयासक्ति मपि विहाय दानादिभि रर्थि नस्सन्तर्प्य गुरु मुपसृत्य प्रणम्येद मवोच; त्तदनु वशिष्ठो ऽप्ययं हरे र्दशावतारे ष्वन्यतम श्श्रीराम चन्द्रावतार इत्यानन्द मापेदिवान् ॥

विशे ॥ अनेन श्रीरामचन्द्रस्यावतार रूपत्वम् सूचितम् ॥

अव ।। अथ विश्वामित्र समागमः प्रतिपाद्यतेः—

**यो राम नामक कुमारो बभूव भुवि नारायणोंऽशत इति**
**श्रीराघवं दनुजमारन्दिदृक्षु रघदूरस्सगाधि तनयः ।**
**क्रूरारिवीर घन भीराज चन्द्र गृह मारादवाप मुदितो**
**धीरो नृपस्तदनु दूरादुपेत्य मुनि वीरं ननाम विनयी ।।**

खण्डा ।। भुवि, यः, रामनामक कुमारः, बभूव, सः, अंशतः, संजातः, नारायणः - इति, दनुज मारम्, तम्, श्रीराघवम्, दिदृक्षुः, अघदूरः, सः, गाधि तनयः, क्रूरारि वीरघन भीराज चन्द्र गृहम्, आरात्, अवाप, तदनु, धीरः, नृपः, मुदितः, विनयीसन्, मुनिवीरं, दूरात्, उपेत्य, ननाम ।।

व्याख्या ।। य इति ।। भुवि = भूमौ, यः, राम नामक कुमारः = अर्भकः, बभूव; सः, अंशतः = अंशात्संजातः, नारायणः - नारं = ज्ञानं, अयनं यस्य स इति विग्रहः = श्रीमहाविष्णुः - इति = एवम्बुद्ध्या, दनुजान्मारयतीति दनुजमारः, तम्, श्रीराघवम् = श्रीरामचन्द्रम् । द्रष्टुमिच्छुः = दिदृक्षुः - अघदूरः = पापविदूरः, सः, गाधि तनयः = विश्वामित्रः, क्रूराश्च ते अरयश्च क्रूरारयः, तेषु ये वीराः, तेषां घनभीः = अधिक भयदः-घना भीः यस्मा दिति बहुव्रीहिः - स चासौ राजचन्द्रश्चेति तथोक्तः - तस्य, दशरथ-

अत्यन्तम्, विदग्धाः = कुशलाः - अतिविदग्धाः, अभवन्; स्निग्धालकाः = मसृण केश भराः, नृपति मुग्धाः = दशरथ स्त्रियः, सुष्ठु पुण्येन, परिदिग्धात्मिकाः = संयुक्तात्मानः-दशरथश्च - शिशूनाम्, विदग्धानि = कुशलानि या न्यटनानि, तैः, दग्धम् अत्यघम् = अतिपापम्, यस्य स तथोक्तः - दग्धा त्यघः, इति = इत्येवम् - अमराः = देवाः - मुग्धाः = मूढाः, बभूवुः = आसन् ।।

भावः ।। अथामराश्श्रीरामचन्द्र रूपेण श्रीहरे र्भुवि जननादु द्विग्नान्तरङ्गाः - नः धाम धिक् - इत्यादिना विचिन्त्यापि भुवः, दशरथ पत्नीनाम्, तस्य च भाग्य विशेष मुद्दिश्य हृष्टान्तरंगा बभूवुः ।।

अव ॥ दशरथ कौशिकयोः प्रश्नप्रतिवचनादिक मुपपाद्यते:-

**यो राजमौनि पदनीराजित स्वगुरुणाऽऽराधितोऽपि स मुनिः**
**कारुण्यतो मयि किलारास्मदोक इति भूरिप्रमोद मनसा ।**
**हे! राजहंस! हृदि ते राजते किमिति वीरेण सन्निगदितो**
**भो! राडहन्तव कुमारान्दिदृक्षु रिति वीरर्षिरीश मवदत् ॥**

---

खण्डा ॥ यः, राजमौनि पदनीराजितः, स्वगुरुणा, अपि, आराधितः, सः, मुनिः, मयि, कारुण्यतः - अस्मदोकः, आर किल - इति, भूरिप्रमोद-मनसा, वीरेण, हे ! राजहंस ! ते, हृदि, किं, राजते, इति, सन्निगदितः, वीरर्षिः, भो ! राट् ! अहम्, तव, कुमारान्, दिदृक्षुः, इति, ईशम् ,अवदत् ॥

व्या ॥ य इति ॥ य , राजमौनि पदे-नीराजितः=प्रकाशितः, यद्वा राज-मौनिभिः पदयोः नीराजनी कृतो वा - स्वस्य = आत्मनो दशरथस्य वा, गुरुणा=वसिष्ठेनापि, आराधितः=संपूजितः, ब्रह्मर्षित्वेन संबोध्य सन्मानित इत्यर्थः। सः, मुनिः = विश्वामित्रः, मयि, कारुण्यतः = दयावशात्, अस्मदोकः = मद्गेहम्, आर किल = प्राप्तवान्हि-इति = इत्थम्, भूरि = अधिकः प्रमोदः यस्मि स्तेन, मनसा=सन्तुष्टान्त रंगेण, वीरेण तेन दशर-थेन, हे! राजहंस!=हंसानां=यतीनाम् - राजा=श्रेष्ठः - तस्य संबुद्धौ हे! राजहंस! यतीश्वर! ते=तव, हृदि=मनसि, किं - राजते - किमस्ति-इति,

---

स्येत्यर्थः - गृहम् = गेहम्, आरात् - आराद्योगे द्वितीया - अवाप = अप्रा-पत् - तदनु = ततः, धीरः, नृपः = दशरथः, मुदितः =सन्तुष्टः, विनयी-सन् = विनययुक्तस्सन्, मुनिषु वीरं, कौशिकम्, दूरात्, उपेत्य = समीपं गत्वा, ननाम = प्रणाम मकरोत् ॥

भावः ॥ यो ऽ यन्दशरथ सुतो ज्येष्टः राम नामक स्स नारायण एव भुव्यवततारांशत इति दिव्यदृष्ट्या ऽ व बुद्ध्य कौशिक एकदा त मति मानुष-मात्म वंशोद्धारकं दिदृक्षुः, पंक्ति रथ गेह मवाप । तत स्स दशरथो ऽपि विनयीसन् तं सङ्गत्य प्रह्वी भावापन्नो बभूव ॥

अत्र ॥ श्रीराम प्रेषणेऽति विश्वामित्रेण दशरथ स्सं प्रार्थ्यते :-

**नोरामचन्द्रनृपते राप्यमन्यदिह वीराग्रय! सत्यवचन!**
**प्राब्ध पुण्यफल माराक्त्वयायाऽऽप्तमसुराराति योगवशतः।**
**स्वारब्ध विघ्नपरिहाराय दैत्यजन मारायराममनघम्**
**धीरं विभो! प्रहिणु शूरं; भयंत्यज कुमाराच्छुभंभवतुते ॥**

---

खण्डा ॥ हे! वीराग्रय! सत्यवचन! इह-रामचन्द्र नृपतेः - अन्यत् - आप्यम् - नो - असुरातियोगवशतः - त्वया - प्रारब्ध पुण्य फलम्-आरात्-आप्तम् - हे! विभो! स्वारब्ध विघ्नपरिहाराय - दैत्यजन माराय - अनघं - धीरं - शूरं=रामं-प्रहिणु-भयं, त्यज; ते कुमारात्-शुभं, भवतु ॥

व्याख्या ॥ नो - इति ॥ वीराणां अग्रयः=प्रथमः - तस्य संबुद्धौ= हे वीराग्रय! सत्यवचन! इह=अस्मिन् लोके, रामचन्द्रनृपतेः=श्री रामराजात्, अन्यत्=परं, आप्यम्=प्राप्यम् -नो=नहि-असुराणां=राक्षसानां, अरातिः =शत्रुः-तस्य योगवशतः=सम्बन्धकारणात् - त्वया, प्रारब्ध पुण्यस्य,फलम्; आरात् - समीप एव - आप्तम्=प्राप्तम् - हे! विभो दशरथ! स्वेनारब्ध मिष्ट्यादि। तस्ययो विघ्नस्तत्परिहाराय=नाशनाय - विश्वमित्रारब्ध यागा-न्तरायाभावाये त्यर्थः - न केवलं स्वार्थलाभः - किन्तु रामावतार साफल्य

---

सन्निगदितः=सम्यगुक्तः, वीरर्षिः=विश्वामित्रः, भो! राट्! दशरथ! अहं, तव, कुमारान्=सुतान्, दि दृक्षुः=द्रष्टुमिच्छा वा नस्मि, इति ईशम्=प्रभुं दशरथम्, अवदत्=जगाद।

भावः ॥ योऽय मति कोपनो राज मौनि पद लांछितः प्रथमतस्त्व गुरुण प्यन्तरं ब्रह्मर्षि रित्याराधितस्स गाधि तनयो मद्गृह मवाप; अतोऽय मस्मद-न्वयोप्य न्वर्थतां गत इति प्रकृष्ट तुष्टान्तरंगो दशरथः, भो! योगिन्! किमास्ते ते हृदि; तदावेदयानु पदमेव दित्सु रस्मी त्यवदत् - तत स्स कौशिकः-अयि! राजन्! यदा त्वदावासे पुत्त्रजनन वार्ताऽश्रावि तदैवाहं ककुध्वंसिभ्योऽपगत-भीस्संवृत्तोऽस्मि। अत एवेदानीं तद्दर्शनार्थं मह मिहागतोऽस्मीति जगाद ॥

अव ॥ श्रीराम प्रेषणे सन्देहान्दोलित दशरथाय गुरूक्तिः –

प्रत्यादिदेश नृपमेत्याथ तद्गुरुवरोऽत्यन्तपुण्यनिलय
स्स त्याहते! तव सुगत्याऽऽगतोऽयमधिकात्याहितङ्गमयिता ।
स त्वं नचेत्तनय मत्यादरात्प्रहिणु धृत्या; शुभम्भवतु ते
क्षि त्याङ्ग मिष्यसि यशोऽत्यन्त मद्य निज कृत्ये भवातिनिपुणः ॥

---

खण्डा ॥ अथ, अत्यन्त पुण्यनिलयः, तद्गुरुवरः, नृपम् प्रति, एत्य, आदिदेश, हे! सत्याहते! अयं तव, सुगत्या, आगतः, सत्यम्, न चेत्, अधिकात्याहितम्, गमयिता–धृत्या - तनयं, अत्यादरात्, प्रहिणु, ते, शुभं, भवतु, क्षित्यां, अत्यन्तं, यशः, गमिष्यसि-अद्य निजकृत्ये–अतिनिपुणः भव ॥

व्याख्या ॥ प्रतीति ॥ अथ = विश्वामित्राभिलाषा वेदनानन्तरम्; अत्यन्तम् पुण्यस्य निलयः=आलयः, तस्य, दशरथस्य, गुरुवरः=श्रेष्ठो गुरुः–वशिष्ठः, नृपम्=राजानं दशरथम्, एत्य=प्राप्य, प्रत्यादिदेश=उपदिदेश - सत्ये आहति र्यस्य सः सत्याहतिः, तस्य संबुद्धौ; हे! सत्याहते! दशरथ!

---

मप्यस्तीति द्योतयितु मुत्तर पादेन वक्ष्यते-दैत्याश्च ते जनाश्च तथोक्ताः-तेषां माराय=मृतये नि॥ मारोऽनङ्गे मृताविति विश्वः-अनघम्=पापरहितम्, धीरं =धैर्यवन्तम्, शूरं=पराक्रमवन्तञ्च, रामं=ज्येष्ठापत्यभूतमिति भावः-यद्वा योगिहृदयानन्दकरं राममिति वा-प्रहिणु=प्रेषय, भयम्=भीतिम्-त्यज=ज ि- ते=तव तु, कुमारात्=पुत्रात्, शुभं भवतु=मंगळमस्तु - स्नुषाप्राप्तिरूप- गोत्राभिवृद्धिर्वा उत अपवर्ग रूपाति भद्रंवा भवत्विति महर्षेराशीर्वादः ।

भावः ॥ श्रीरामचन्द्रादन्यदिह लोके नास्माकं प्राप्यमस्ति; इदानीम्मयै- कोऽध्वरः प्रारब्धः - तस्य विघ्नकरा दनुजा स्सुबाहु मारीचादयः - तन्निर- सनेऽयं समर्थः – तत एनम्भवत्पुत्रं राम म्मया सह प्रहिणु; भयं जहि-अचि- रेण ते शुभं भविष्यती त्यभिप्रायः ॥

विशे ॥ अत्र - दैत्यजन माराय, कुमारा च्छुभं भवतु ते - इत्यादिभी- राक्षसनिबर्हणं, सीतापरिणयादिक ञ्च काव्यार्थ सूचनारूपं व्यज्यते ॥

अव ॥ श्रीरामचन्द्र प्रेषणं; विश्वामित्रेण श्रीरामलक्ष्मणयोरुपदेशश्च :-

**चोद्यं वचस्तदनुमोद्य प्रभुस्स्व सुतमाद्यं सलक्ष्मण मथ**
**प्रोद्यन्मुदा विनय विद्योतितोऽनयद विद्यां विहाय सुमतिः ।**
**सद्यस्तयोरमल विद्यो बलातिबल विद्ये समर्प्य सवने**
**चोद्युज्य पोतयुगळोद्यद्बलात्पललखाद्यप्रणाशमनयत् ॥**

---

खण्डा ॥ अथ, सुमतिः, प्रभुः, तत्, वचः, अनुमोद्य, प्रोद्यन्मुदा, विनय विद्यो तितस्सन्, अविद्यां, विहाय, सलक्ष्मणम्, आद्यम्, स्वसुतम् - अनयत्-चोद्यम्-अमल विद्यः, सद्यः, तयोः, बलातिबल विद्ये, समर्प्य, सवने उद्युज्य, च, पोतयुगळोद्यद्बलात्, पलल खाद्य प्रणाशम्, अनयत् ॥

व्याख्या ॥ चोद्यमिति ॥ अथ = वसिष्ठोपदेशानन्तर मिति भावः - सुमतिः - शोभना मति र्यस्य सः तथोक्तः - प्रभुः = दशरथः, तत् = वशिष्ठोक्तम्, वचः = वाक्यम्, अनुमोद्य = अंगीकृत्य, प्रकर्षेण उद्यती या मुत्, तया = अतिसंतोषेण, विनयेन विद्योतितस्सन् = प्रकाशितस्सन्, अविद्यां = अज्ञानं, = विहायत्यक्त्वा, लक्ष्मणेन सह वर्तत इति सलक्ष्मणः, तम्, आद्यम् =

---

अयं = कौशिकर्षिः, तव, सुगत्या = सुकर्मणा, आगतः = प्राप्तः-सत्यं, न चेत्- तदभिलाषं न पूरयिष्यसि चेत् - अधिकं अत्याहितम् = महाभीतिं - नि ॥ अत्याहितं महाभीतिः कर्मजीवा नपेक्षिष्वि त्यमरः - गमयिता = प्रापयिता - धृत्या = धैर्येण, तनयं = त्वत्सुतं, अत्यादरात् = अत्यन्तादरपूर्वकं, प्रहिणु = प्रेषय, - ते = तव, शुभं = कल्याणम्, भवतु, क्षित्यां = भुवि, अत्यन्तम् = अत्यधिकं, यशः = प्रतिष्ठाञ्च, गमिष्यसि = लप्स्यसे, अद्य, निज कृत्ये = स्वकार्यनिर्वहणे, अतिनिपुणः = कुशली, भव ॥

भावः ॥ तदनु वशिष्ठः - भो! राजन्! अयमतिकोपनो विश्वामित्रः- एतस्य पुरोऽनृत वाग्माभूः - यद्येतस्य रुट् संजनिष्यति तर्हि तेऽप्रियं भविष्यति - अतो भवदग्रतनूजं रामनत्यादरेण प्रेषय - यशो लभस्व; स्वकार्यकरणे निश्चलमना भव - इति नृपमाज्ञापयामास ।

अव ॥ श्रीराम लक्ष्मण कृत याग संरक्षणादि रुपदिश्यते :—

दम्भाद् सृक्पिशित कुम्भैर्मुनीन्द्र मख शुम्भावसादन परा-
न्ज म्भार्यरीन्सरभस म्भासुरौ सशरडिम्भौ निजघ्नतु रुभौ ।
दाम्भं सुबाहु मथ जम्भारिलोक मपि चाम्भोनिधिन्तदनुजम्
हुम्भोरवेण मुनि सम्भावनान्वित मदम्भार्भकावनयताम् ॥

खण्डा ॥ भासुरौ, सशरडिम्भौ, उभौ, दंभात् - असृक्पिशित कुंभैः मुनीन्द्रमखशुम्भावसादनपरान्, जम्भार्यरीन्, सरभसं यथा तथा, निजघ्नतुः, -अथ - अदम्भार्भकौ, हुंभोरवेण, दांभं, सुबाहुम्, जम्भारिलोकम्, तदनुजम्, अपि-अम्भोनिधिम् - मुनिसंभावनान्वितं यथा तथा - अनयताम् -

व्याख्या ॥ दंभादिति ॥ भासुरौ=बलातिबल विद्याविलसितौ, शरैः सह वर्तेत इति सशरौ, तौ च डिंभौ=द्वाव प्यर्भकौ रामलक्ष्मणौ, उभौ, दंभात् =कैतवात् - असृक्च, पिशितञ्च=असृक्पिशिते; तद्वद्भिः कुम्भैः-मुनीन्द्रस्य =विश्वामित्रस्य यो मखः=यागः-तत्संबन्धिनी या शुम्भा=शोभा-शुभ-शुंभ-

स्वसुतम्=आत्मनः पुत्त्रम्, अनयत्=प्राणयत् - चोद्यं=इत्थं दशरथोऽत्यन्तप्रियौ पुत्त्रौ मुनिना साकं प्राहिणो दित्येत च्चित्र मित्याशयः-नि ॥ त्रिषु चोद्यं चोदनार्हे क्लीबे तु प्रश्न चित्रयो रिति नानार्थ रत्नमाला - अमला विद्या=ज्ञानं यस्य सः विश्वामित्रः - सद्यः=तदनु, तयोः=राम लक्ष्मणयोः, बलातिबल विद्ये = तदभिधानवद्विद्ये, समर्प्य = उपदिश्येति यावत् - सवने = यज्ञे, उद्युज्य = उद्युक्तो भूत्वा, च, पोतयुगळेन = अर्भकद्वयेन- नि ॥ पोतः पाकोऽर्भको डिंभ-इत्यमरः - उद्यत्=उद्भूतं यद्बलं-तस्मात् हेतौ पंचमी- पललं खाद्यं येषान्ते पललखाद्याः=मांसाशिनः, राक्षसा इति यावत् - तेषां - प्रणाशं=नाशनम्, अनयत्=कारयामास ॥

भावः ॥ अथ दशरथोऽपि राजा वशिष्ठ प्रचोदित स्वसुतौ रामलक्ष्मणौ तम्मुनि मनुप्राहिणोत् । सोऽपि विश्वामित्रः परं प्रहृष्य तयो रामलक्ष्मणयो रुपदेश व्याजेनाचार्यत्वं प्राप्यात्मानं कृतार्थयितुं बलातिबल विद्ये चोपदिश्य स वने विघातुक दुष्टराक्षस निबर्हण मकारयत् ।

अव ॥ जनकानु चरा विश्वामित्राय सीताकल्याण मावेदयाञ्चक्रुः –

**यागं समाप्य कृतरागे तयो र्विधुतरागे प्यपेतकलुषे**
**वेगा द्विदेहजन पूगा स्समेत्य नृपयोगीश मूचुरथ ते ।**
**भो ! गाधि पुत्त्र ! जनकागरमेहि वरयोगं सुतैतु नृपते**
**र्योगीश्वराधिपतिरागत्यचात्मतनुभागेन योजयतु माम् ॥**

---

खण्डा । यागं, समाप्य, विधुतरागे, अपि - अपेत कलुषे - तयोः - कृतरागे सति - अथ - वेगात् - ते - विदेहजनपूगाः - नृपयोगीशं-समेत्य-आहुः - भो! गाधि पुत्त्र! जनकागारं - एहि - नृपतेः, सुता - वरयोगम् - एतु - योगीश्वराधि पतिः - आगत्य - माम् - आत्मतनुभागेन - योजयतु ॥

व्याख्या ॥ यागमिति ॥ यागम्=सवनम्, समाप्य=समाप्तिं कृत्वा, विधुतः रागः येन सः तथोक्तः अपध्वस्ताखिल प्रापंचिकासक्ति रित्यर्थः,

---

शोभाया मिति धातोः पचाद्यच् - शोभायाः - अवसादने=नाशने, परान्=आसक्तान्; जम्भारेः=शक्रस्य, अरीन्=शत्रून्, राक्षसानिति यावत्-सरभसं यथा तथा; नि ॥ रभसं वेगहर्षयो रिति विश्वः-निजघ्नतुः=नितरां हिंसां चक्रतुः - अथ=ततः, अदंभार्भकौ=दम्भरहितावुभौ शिशू, अविदितकपटाविति यावत् - हुंभोरवेण=(अनुकरणध्वनिः) हुंभो इत्येतद्रवेण - दांभम्=कितवम् - सुबाहुम्-तन्नामानन्दनुजम्, जम्भारिलोकम्=स्वर्लोकम्-श्लो ॥ द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ-परिव्राड्योगयुक्तश्चरणे चाभिमुखो हत इति - स्मरणात् - भगवता श्रीरामेण हतस्य कितवस्यापि नित्यस्वर्गावास फलदत्वाच्च, तदनुज मपि=मारीच मपि - अम्भोनिधिम्=समुद्रम्-मुनि संभावनान्वितं यथा तथा=विश्वामित्र कृतगौरव सहितं यथा भवति तथा अनयताम्=प्रापयाञ्च क्रतुः ।

भावः ॥ बलाऽतिबलविद्या प्रकाशितौ तौरामलक्ष्मणावति कपटान सुरान्विनिर्जित्य सुबाहुम्मारयामासतुः-तदनुज मम्भोनिधिं नयतु मुंनि संभावनाञ्च लेभात इति ॥

अव ॥ सीतारामादीनां कल्याणम् - अयोध्यागमनञ्चोप वर्ण्यते :-

**तेनाह्वयेन नृपसूनू प्रहृष्य मुनिरानीय चाप मिथिला**
**म्भूनायकात्मजनतानीत मीशधनुरानम्य योऽच्छिनदरम् ।**
**सूनां समर्प्य रघुसूनोस्ततस्स जनके नो मुदाऽनुजसुताः**
**मानाददापयदथैनानुजेभ्य इति तेना पुरात्म नगरीम् ॥**

---

खण्डा ॥ तेन, आह्वयेन, मुनिः, प्रहृष्य, नृपसूनू, आनीय - च - मिथिलां, आप - यः - भूनायकात्मजनतानीतं - ईशधनुः - आनम्य अरम्- अच्छिनत् - ततः - सः, जनके नः - रघुसूनोः - मुदा सूनां, समर्प्य - अथ -

---

तथा भूतेपि, अपेतम् कलुषम् यस्मात्तस्मिन् विश्वामित्र - तयोः=रामलक्ष्मणयोः-अत्र वैषयिक सप्तमी -कृतो रागो येन तस्मिन्सति; यद्वा आप्तकामस्यापि आत्मकामनाऽविरुद्धा-वीतरागस्य विश्वामित्रस्य परंधाम्निरामे कृतरागत्वं =युक्तमेवेति भावः - अथ=तदनु-वेगात्=द्रुतम् - ते - विदेहजन पूगाः= मिथिलानगराधिपति प्रेषित जनसंघाः-नृपयोगीशम्=राजर्षिम्,कौशिकम्,समेत्य =उपसृत्य, ऊचुः, भोः! गाधि पुत्र! कौशिक! जनकस्य, अगारं=गृहम्एहि =आगच्छ - नृपतेः=मिथिलेशितुः, सुता=पुत्रिका, वरयोगम् = धन- योगम् - एतु=प्राप्नोतु - योगीश्वराधिपतिः=योगीश्वरेशः - परमात्मा, भगवतो योगीश्वराधिपतित्वे गीतावचनम् प्रमाणम्-आगत्य=समेत्य, माम्= लक्ष्मीम्-नि ॥ इन्दिरा लोक माता मेत्यमरः-आत्मनः तनोः भागेन, देहार्धेन- योजयतु=संयोजयतु - विष्णोरेषानपायिनीति स्मरणात् ॥

भावः ॥ यागसमाप्त्यनन्तरन्तयोः कृतरागे विश्वामित्रे विश्रांतिङ्गते विदेह पौरास्समागत्य मुनि मित्थ मूचुः - भो! मुने ! जनकागारे सीता परिणयो भविष्यति-श्रीमहाविष्णुरेवागत्य तां सनाथाङ्करिष्यति; अतस्तच्छीता- राम कल्याणोत्सव साधनाय यूयञ्जनक गृहमेष्यथः ॥

विशे ॥ श्लोऽकेस्मिन्पूर्वपादे विरोधाभासः - विषयेच्छाविरहितस्य मुनेः रामलक्ष्मणयोः रागोऽस्तीति विरोधः-परमात्मनि रागोऽविरुद्ध इति परिहारः- श्लो ॥ आभासत्वे विरोधस्य विरोधाभास इष्यते ॥

मानात्-अनुजसुताः-ऐनानुजेभ्यः-अदापयत्-इति-तेन-आत्मनगरीम्-आपुः ॥

व्याख्या ॥ तेनेति ॥ तेन = पूर्वोक्त विदेह जनानीतेन, आह्वयेन = उदन्तेन ॥नि॥ उदन्त स्स्यादथाह्वय - इत्यमरः - मुनिः = कौशिकः, प्रहृष्य, नृपसूनू = दशरथराज पुत्रौ, रामलक्ष्मणौ - आनीय; च, मिथिलां, नगरीम्, आप = प्राप - यः श्रीरामः, भूनायकस्य = जनकमहाराजस्य, आत्मनः, जनता = भटपंक्तिः, तया, आनीतम् = सभामुखं प्रापितम्, ईशधनुः = शिवधनुः, आनम्य = आकृष्य नमनं कृत्वा, अरम् = लघु, अच्छिनत् वभञ्जेत्यर्थः - ततः = तदनुपदमेव, सः, जनकेनः = जनकराजः, रघुसूनोः = तस्य श्रीरामचन्द्रस्य, मुदा = सन्तोषेण, श्रीरामचन्द्रः जामाता बभूवेति परमानन्देने त्यर्थः - सूनां = पुत्रीम् - सीतां, नि॥ सूना पुत्र्यां वधस्थानगल शुंडिकयो रिति विश्वः-समर्प्य = प्रदाय-अथ= तदनु, मानात् = गौरवात्, श्रीरामांशा अभवन्नित्यभिमानाद्वा, अनुज सुताः = ऊर्मिळा मांडवी श्रुतकीर्तीः, इनवंशे भवः=ऐनः= श्रीरामचन्द्रः - तस्य अनुजेभ्यः = भ्रातृभ्यः, अदापयत् = दापयामास - इति = इत्थम्, कृतोद्वाहाः, तेन = कळत्रादि बन्धुभिस्साकं, आत्मनगरीम् = अयोध्यापुरम् = आपुः - प्रापुः - रामादयः इति भावः ॥

भावः ॥ जनक कृताह्वान श्रवणानन्तरं, रामलक्ष्मणावादाय कौशिकर्मिथिलामवाप; तत स्तत्र सभा भवनं भटैः प्रापितमैश धनुरानम्यारमच्छिनत् श्रीरामः, तस्मै स्वपुत्रीं सीतां जनको दत्वा स्वानुज पुत्रीः रामचन्द्रानुजेभ्यः प्रदापयामास - तदनु सर्वे बन्धुवर्गेणायोध्यां प्रविविशुः ॥

विशे ॥ अत्र गायत्री मन्त्राक्षर संख्यायामन्ते स्थितस्य हल्मात्र-तकारस्यानन्तर्भावे ऽपि कथा पूरणायायं श्लोक उपन्यस्तः ॥

गद्यम् ॥ इति श्रीमद्धयानन पादारविन्द वरिवस्याप्रसादितो
भय कविताकता; श्रीमल्लङ्कोपनामक श्रीशिवराम
शास्त्रि तनू जन्मना श्री सीतारामशास्त्रिणा
विरचिते; तत्त्वबोधिन्याख्य व्याख्यो
पेते श्रीसीतारामायणे
बालकाण्डः
समाप्तः

अव ॥ अयोध्यास्थित श्रीरामादीनां पितृवाक्यपरिपालनादिकमोङ्कारेणारभ्यते

ओमीश इत्यखिल भूमे स्सहेतु रिति रामस्समे सुत इति
क्षेमङ्करस्सपदि चामन्द मुत्सकल भूमीश्वरो दशरथः
रामोऽपि तात वचना मोघकृद्बुध जनामोददोयमिति त
न्ते मेनिरे परमसामान्यपूरुष मिलामान्य राजमनघम् ॥

---

खण्डान्वयः ॥ ओम् ,ईशः, इति, सः, अखिल भूमेः, हेतुः, इति सः, मे, सुतः, रामः, इति च, क्षेमङ्करः, सकल भूमीश्वरः, दशरथः, सपदि, च, अमन्दमुत्-रामः, अपि, तातवचनामोघ कृत् , अयम्, बुधजनामोददः, इति, ते, परमसामान्यपूरुषम् , इलामान्यराजम् , अनघम्, तम् , मेनिरे :–

व्याख्या ॥ ओमिति ॥ ओम्=ओङ्कारः, ईशः=परंब्रह्म, ओमिति ब्रह्म - इति श्रुतेः, इति=इत्थ मिति, सः, ईशः, अखिल भूमेः = सर्वस्याः भुवः, हेतुः=कारण भूतः, इति=एवमिति, सः, कारणभूत ईश एव, मे= मम, सुतः, रामः=श्रीरामचन्द्रः, पुत्र इति च, क्षेमङ्करोतीति क्षेमङ्करः, क्षेम-प्रिय मद्रेण्च - इति खचि मुमागमश्च, सकल भूमेः, ईश्वरः=प्रभुः, दशरथः =राजा, सपदि च=तत्काले, चकारः पादपूरणः - अमन्दा मुत् यस्य सः तथोक्तः - अभूदिति शेषः - रामोऽपि, तातस्य=पितुर्दशरथस्य, वचनम् =वाक्यम् मोघम् करोतीति मोघकृत्, स नभवतीत्यमोघकृत् तात सम्बन्धिवच-नस्यामोघं कृदिति विग्रहः-तथोक्तस्सन्, बुधजनेभ्यः=सुधीभ्यः, आमोदम्= सन्तोषम्, ददातीति तथोक्तः, बुधजन शब्दस्य चतुर्थी । नि ॥ मुत्प्रीतिः प्रम-दो हर्षो प्रमोदामोद सम्मदा-इत्यमरः-इति=एवम्, ते=पौराः, सामान्यश्चा सौ पूरुषश्च-मायामानुष विग्रहत्वात्-परमश्चासौ सामान्यपूरुषश्च परमः = श्रेष्ठः सामान्यपूरुषाणा मिति वा –अथवा – परमश्चासौ सामान्यश्च परमसामान्यः-परमसामान्यश्चासौ पूरुषश्च – इति विग्रहः, परमपूरुषत्व सामान्यपूरुषत्व लक्षण-द्वयवानित्यर्थः-मान्यश्चासौ राजाच मान्यराजः-राजाहस्सखिभ्यष्टच्, इलाया-म्मान्यराजः - यद्वा – इलया = भुवा, मान्यश्चासौ राजा च - अस्य रामस्य स्वजामातृत्वात् – राक्षसहननाद्य पूर्वकार्यकरणद्वारा स्वभार हरत्वा च्चेत्या-

अव ॥ श्रीरामचन्द्रावतारमविदितन्तद्भ्रातृभि रित्युपवर्ण्यते :-

तद्राम वाक्य मतिभद्रन्दधुश्शिरसि मुद्रायितास्तदनुजाः
भद्रायितन्दनुज विद्राविणं हरि मसद्रागरञ्जितहृदः ।
क्षुद्रासुरास्वनिलकद्रूसुतायित इति द्रागपीश मथ सद्
सद्रूप इत्यमल चिद्रूप इत्यपिच भद्रं विदुर्न नृहरिम् ॥

खण्डा ॥ अथ, तद्रामवाक्यम्, अतिभद्रम्, तदनुजाः, शिरसि, मुद्रायिताः, दधुः, असद्रागरञ्जितहृदः, दनुज विद्राविणम्, भद्रायितम्, हरिम्, क्षुद्रासुरास्वनिलकद्रूसुतायितः, इति, विदुः - द्रागपि, तं, नृहरिम्, ईशम्, सद्रूपः, इति, अमलचिद्रूपः, इति च भद्रम् तथा यथा, न विदुः ॥

व्याख्या ॥ तदिति ॥ अथ=अयोध्यानगर प्रवेशानन्तरम्, तस्य, अनुजाः=श्रीरामसहोदराः, तस्य=रामचन्द्रस्य, वाक्यम्=वचनम्, अत्यन्तम् भद्रम्=अतिभद्रम्, अतिमात्रश्रेयोदायकम्, शिरसि=मूर्ध्नि, मुद्रेवा

---

शयः - अतएवानघम् = अपापम् - तम् = श्रीरामम्, मेनिरे = बुबुधिरे - इत्यभिप्रायः ॥

भावः ॥ ओङ्काररूपः परमात्मा मम पुत्रत्वेन रामनाम्नाऽवततार - इति स राजा दशरथस्तुष्टिमाप । श्रीरामचन्द्रोऽपि पितृवाक्य परिपालनपरो भवति - इत्येवम्पिता पुत्रन्यायो दशरथसुतेषु सन्दृश्यत इत्ययोध्या पौरास्समधिकम्मुमुदिरे ॥

विशे ॥ अत्र - 'ओमित्येकाक्षरं ब्रह्म' - इति श्रुतेः - 'वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना' - इति स्मृतेश्च वेदस्वरूपस्य रामायणस्यादौ - 'वेदानाम्प्रणवः प्राण' - इति श्लोकोक्ति मनुसृत्य काण्डादावोंकारोपन्यासः । अपि च-'ओमिति ब्राह्मणः प्रवक्ष्यन्नाह'-इत्युपनिषदश्च ओङ्कारादिना ग्रन्थारम्भः - किञ्च प्रणवस्वरूप श्श्रीराम इति - स एवास्य लोकस्य जननरक्षणोपसंहारकर्ता चेति तद्वर्णनापरत्वेनोद्घाटित मिति सर्वं सुस्थं भवति-काण्डेऽस्मिन्नपि गायत्र्या आवृत्ति र्भविष्यतीत्यलम् ॥

अव ॥ भरत शत्रुघ्नयोर्मातुल देशगमन मुपवर्ण्यते :-

सोऽलङ्कृतो विनय शीलैश्चतुर्भि रथ बालैर्युतो दशरथः
कालक्रमेण शुभशीलौ कनिष्ठजनि बालौ स्वमातुलपुरम् ।
लीलालकौ गुणविशालौ सुतावधिक लोलावनीनय दिन
श्श्रीलक्ष्मणाग्रजनि बालस्य रामनृप मौळे रुदर्कह महो ॥

---

खण्डा ॥ अथ, विनयशीलैः, चतुर्भिः, बालैः, युतः, दशरथः, इनः, सः, अलङ्कृतस्सन्, कालक्रमेण, शुभशीलौ, कनिष्ठजनिबालौ, लीलालकौ,

---

चरिताः, तथोक्ताः - इत्याचारार्थे क्यङ्; यद्वा -मुदेवराः = आनन्द संपत् - तया, इतः, इति वा - दधुः = धारयामासुः - तथापि, असत् = जन्मजरामरणादि रूपम् - तस्मिन्, रागेण = प्रेम्णा, रञ्जितम् हृत् येषान्ते तथोक्ताः - असत् = प्रपञ्चः, तत्सहजो यो रागः = प्रापंचिकरागः - अज्ञानावृतज्ञानवन्तो मोमुह्यमानास्सन्तः, दनुजान् = मधुकैटभादीन्, विद्रावयतीतितम्, मधुकैटभहन्तारं - भद्रमिवाचरितम् = भद्रायितम्, हरिं = श्रीरामं, क्षुद्राश्च ते असुराश्च तेषा मसवः = प्राणाः-त एव अनिलः तस्य कद्रूसुत इव आचरतीति तथोक्तः - इति = एतन्मात्रमेव - विदुः = जज्ञिरे-ईशम् = सर्वभूतेशमपि. तम्, नृहरिम् = पुरुषसिंहम्, यद्वा नृसिंहस्य रूपम् - भ्रातरं; रामम्, सत् रूपं यस्य सः-इति, अमलम् चिद्रूपम् यस्य सः इति च भद्रम् यथा तथा, सच्चिदानन्द घनमिति यावत् - द्रागपि = मनागपि - न विदुः = न बुबुधिरे - विदोर्ज्ञा नार्थाल्लिट्.

भावः ॥ लक्ष्मणादि सोदराः श्रीरामवाक्यम् शिरसा धारयन्तिस्म-तथापि श्री महाविष्णुरेवैवम् रामावतारेणोत्पन्न इत्यजानन्तस्ते प्राकृतप्रेमयुता दनुजगर्वहरण पटिष्ठम्, गरिष्ठ मित्येतावन्त मेव जज्ञिरे, न तु सच्चिदानन्द रूपमिति विदा म्बभूवुः ॥

विशे ॥ अत्र सच्चिदानन्दरूपः परमात्माऽ यन्दाशरथिरिति ध्वन्यते - सा च ध्वनिः-सोदराज्ञान रूप स्वभावोक्त्यलङ्कृतिनोपवर्णितेत्यत्रापि स्वभावोक्त्यलङ्कारेण वस्तुध्वनि रवगम्यते-श्लो ॥ स्वभावोक्ति रसौ चारु यथा वद्वस्तु वर्णनमिति लक्षणात् ॥

गुणविशालौ, अधिकलोलौ, सुतौ, श्रीलक्ष्मणाग्रजनिबालस्य, रामनृपमौळेः, उदर्कहम्, स्वमातुलपुरम्, अनीनयत् - अहो!

व्या ॥ स इति ॥ अथ=एवङ्गते काले, विनय एव शीलम् येषान्तै श्चतुर्भिः, बालैः = अर्भकैः, युतः = संयुतः, दशरथः, इनः = प्रभुः, नि ॥ इनस्सूर्ये प्रभावित्यमरः-सः राजा, अलंकृतः = पुत्रोत्साहेन विभ्राजितस्सन्, कालस्य क्रमेण, शुभशीलौ = भद्रस्वभावौ, कनिष्ठे जनी ययोस्तौ बालौ = अर्भकौ, भरतशत्रुघ्नावित्यर्थः, लीलाः अलकाः ययोस्ताविति, गुणैः = पूर्वोक्तैर्विनयादिभिः, विशालौ=अधिकौ, सुतौ=पुत्रौ, रामलक्ष्मणेतरा वित्यर्थः-अधिकम्-लोलौ=अतिचञ्चलौ, अथवा-अधिका लोला=शोभा, सम्पद्वा ययोस्ता विति वा-नि ॥ लोलश्चले स तृष्णे च लोलातुरसनाश्रियो रिति हैमः, अधिक प्रेमास्पदाविति यावत् - श्री=शोभायुक्तः, लक्ष्मणादग्रे जनि र्यस्य सः तथोक्तः, श्रीश्चासौ लक्ष्मणाग्रजनि बालश्चेत्यर्थः - अग्रजस्येति भावः - रामाश्चासौ नृपमौळिश्चेति तथोक्तः, तस्य श्रीरामचन्द्रस्य; उदर्कम्=भावि फलम्, पट्टाभिषेकरूपम्, हन्तीति=उदर्कहम्, उत्तरफल विनाशकम् - नि ॥ उदर्कःफ लमुत्तरमिति विश्वः-तद्यथा भवति तथा उत्तरफल विनाशकं यथा तथेत्यर्थः, स्वमातुलपुरम् =भरत शत्रुघ्नात्म मातुल पत्तनम्, केकयदेशम्, अनीनयत्=प्राहिणोत् - नीञः द्विकर्मकत्वं-अहो! इति सांभाविकविस्मयार्थः ॥

भावः ॥ दशरथराज श्चतुर्भिः पुत्रैः कालमानन्देन गमयन्नास्ते, किञ्च कदा भरत शत्रुघ्नौ स्वमातुलपुरं जिगमिषू पितरमाज्ञां ययाचाते-सोऽपि प्रभुस्तावनु मेने ॥

विशे ॥ अत्र भरत शत्रुघ्नगमनं नैजमपि भाव्यनर्थस्य श्रीरामचन्द्राभिषेकान्तराय रूपस्य हेतुत्वोत्प्रेक्षाद्योतक मदविन्यासकारणाद हेतोर्हेतुत्वेनोपतर्कितोत्प्रेक्षालङ्कारः - स च व्यङ्ग्यमर्यादया भाति ॥

अव ॥ अथ श्रीरामचन्द्र पट्टाभिषेकालोचन उपवर्ण्यते :-

वीरं सुताग्र जम भीरुं प्रताप बल धीरं समीक्ष्य नृपति
श्शूरं प्रजावनसुभारोचितं वृजिन दूरं वशिष्ठ गुरवे ।
चारैर्न्य वेदयदथारात्प्रजा च मुनिवीरं समेत्य महिप
श्श्रीराम राज्यगत धीरात्मनो दुरित दूरत्व माविकरोत् ॥

---

खण्डा ॥ वीरम्, अभीरुम्, प्रतापबलधीरम्, सुताग्रजम्, नृपतिः, समीक्ष्य, वशिष्ठ गुरवे, वृजिन दूरम्, शूरम्, प्रजावन सुभारोचितम्, यथा तथा, चारैः, न्यवेदयत् - अथ - प्रजा, महिपश्च, मुनिवीरम्, आरात्, समेत्य, श्रीराम राज्य गतधीः - आत्मनः - दुरितदूरत्वम्, आविरकरोत् ॥

व्याख्या ॥ वीरमिति ॥ वीरम्=पराक्रमवन्तम्, अत एव, अभीरुम् =भयरहितम्, प्रतापेन बलेन च, धीरः - तम्, सुतेषु, अग्रजम्=ज्येष्ठम्, रामम्, नृपतिः=दशरथः, सम्यक्, ईक्षित्वा=दृष्ट्वा, विचिन्त्येत्यर्थः - वशिष्ठ इति गुरुः - तस्मै, शूरम्=प्रतापवन्तम्, वृजिनात्=पापात्, दूरम्, पाप-रहित मित्यर्थः-नि ॥ कलुषं वृजिनैनोघ मंहो दुरित दुष्कृतम् - इत्यमरः - अत एव प्रजानाम्, अवने=रक्षणे यो भारस्तस्मै उचितं चारैः = वेगवद्भिर्गूढ-चारैः - न्यवेदयत्=वेदयाञ्चकार, अथ=ततः -प्रजा, महिपश्च=दशरथश्च, मुनिवीरं=मुनिश्रेष्ठम्, वशिष्ठम्, आरात्, समेत्य = सन्निधिमागत्य - श्रीरामराज्यङ्गता=आश्रिता - धीः यस्यास्तादृशी सती, आत्मनः=स्वस्य, दुरित दूरत्वम्=पापरहितत्वञ्च, आविरकरोत्=प्रकटी चकार - वयं दुरित-दूराः - अतएव परमपुरुषस्य श्रीरामस्य शासनम् लप्स्यामहे - इत्यूचुः ॥

भावः ॥ अथ दशरथस्स्वसुतं ज्येष्ठम् रामम् प्रजावनदक्षम् समीक्ष्यै कदा गुरुम् वशिष्टम् प्रजाभिः पुरस्कृतो गत्वा चारैरावेद्य तदाज्ञया कृत दर्शन (सराजा प्रजा च स्वेषां रामराज्य फलं प्रति विवरणञ्चक्रुः ॥

विशे ॥ अत्र - स्वतो निरघाः पुनर्दुरित दूरत्वङ्कथङ्किमर्थं माचकांक्षिरे- इति विरुद्धार्थकत्वेपि दुरिताघयो र्भेदकथनायैवमुक्तम् - नि ॥ अघं दुःखे

अव ॥ श्रीराम पट्टाभिषेकार्थम् प्रजादीनाम् चर्या :-

तुष्टैस्तदीशितुरभीष्टञ्च कर्तु मधिकेष्टैर्जनैश्च परित
स्सृष्टा विचित्र परिपुष्टा पुरी समधिकाष्टा पदात्मक मही ।
कष्टन्ततो दशरथेष्टम् स्वकीय हृद निष्टम् निशम्य कठिना
दुष्टा च *मन्थर निकृष्टाऽवदद्बहुकुचेष्टा च केकयसुताम् ॥

---

खण्डा ॥ ईशितुः, तत्, अभीष्टम् , कर्तुम् - अधिकेष्टैः, तुष्टैश्च, जनैः-पुरी, परितः, समधिकाष्टा पदात्मक मही, विचित्र परिपुष्टा, सृष्टा - ततः, दशरथेष्टम् , स्वकीय हृदनिष्टम्, दुष्टा, कठिना, च, बहुकुचेष्टा, मन्थरनिकृष्टा, केकयसुताम् - अवदत् - कष्टम् ॥

व्या ॥ ईशितुः=विभोर्दशरथस्य, तत्=श्रीरामपट्टाभिषेकरूपम्, अभीष्टम्=अभिलाषितम् , कर्तुम् , अधिकम्, इष्टैः=प्रियैः - तुष्टैश्च=श्रीरामराज्यनिवासोत्सुकैश्च, जनैः=लोकैः - पुरी, परितः=सर्वत्र-समधिकं, अष्टापदं, आत्मा=शरीरं यस्या स्सा अष्टा पदात्मका, मही=भूमिः यस्यां सा हिरण्मय स्थलीति यावत् - विचित्रैः=रङ्गवल्ल्यादिभिः परिपुष्टा=पुष्टि ङ्गता सती, सृष्टा=विरचिता - ततः=तदनन्तरम् -दशरथस्य, इष्टम्, स्वकीयञ्च तत् हृच्च - तस्य अनिष्टम्=अप्रियम्', दुष्टा=दुश्शीला, अत एव कठिना च-मन्थरा च सा निकृष्टा चेति तथोक्ता -बह्व्यः=अधिकाः, कुचेष्टाः यस्या स्सा तथोक्ता सती, कृत्रिम दुःखादि विकार चेष्टाभि रित्यर्थः-केकयसुताम् =कैकेयीम् - अवदत्=तस्यै निवेदयामास - कष्टं हि, व्यसनार्थे प्रयोगः-अथवा बहु, अवददिति वा न्वयः ॥

---

व्यसनेन सोरित्यमरकोशपर्यालोचनया दुःखरहिताः प्रजाः दुरितदूरत्वम् ; पूर्वार्जित दुष्कर्म फल निवृत्त्यर्थम् - च कांक्षिरे - इत्यर्थः - दुरिताघयोर्भेदस्त्वित्थम्-अघं नाम दुःखम्-अथवा इदानीन्तन जन्मनि क्रियमाणेच्छाऽनिच्छा रूपम् - दुरितन्तु - पूर्वस्मि न्जन्मन्यनु सञ्चितम् -अत एव सर्वं कर्मसु ममोपात्त दुरितक्षयद्वारेति शिष्टाचार प्रयोगः पूर्वार्जित पापे विनिश्चितः ॥

अव ॥ अथ कैकेयी प्रार्थना ह्युपपाद्यते :—

राजानमाह बहुळै जत्कुधाऽत्म सुतभूजानिताम् नृपसती
व्याजेन तेऽग्रजनि माजिप्रवीर! वनराजिम् नयाद्य; नृप! भो!
भ्राज द्यशस्क! मम नैजप्रदत्त मसुराजौ वरङ्गमय माम्
त्वा जात्वसत्ययुत धीजल्प दोषमिह राजेन्द्र! नो नयतु भो ॥

खण्डा ॥ नृपसती, बहुळै जत्कुधा, राजानं, आत्मसुतभूजानिताम्, आह- आजिप्रवीर! भो! नृप! अद्य, ते, अग्रजनिम्, व्याजेन, वनराजिम्, नय- भ्राजद्यशस्क! असुराजौ, मम, नैजप्रदत्तम्, वरं, माम्, गमय, भो! राजेन्द्र! इह, असत्ययुत धीजल्पदोषम्, त्वा, जातु, नो नयतु ॥

व्याख्या ॥ राजानमिति ॥ नृपस्य सती=दशरथ भार्या कैकेयी, बहुळम्=अधिकम्, एजत्=वर्धिष्णुः, क्रुध्=रुट्, तया, वर्धिष्यमाणाति कोपेनेत्यर्थः- राजानम्=दशरथम्, आत्मसुत भूजानिताम्=आत्मनः सुतस्य, भूजानिताम्=भूधवत्वम्, आह=अब्रवीत्, हे! आजिप्रवीर!=युद्धशूर! भो! नृप! राजन्! अद्य=इदानीम्, ते=तव, अग्रजनिम्=ज्येष्ठम्, पुत्रं राममिति शेषः-व्याजेन=कैतवेन, वनराजिम्=गहनपंक्तिम्, नि ॥ राजीरेखा-

भावः ॥ दशरथेन सम्मन्त्रितम् श्रीरामाभिषेक वृत्तान्तम् श्रुत्वा प्रजाः पुरीम्परितोऽलब्धकुः - निकृष्टा मन्थरा च त मुदन्त मधिकाधिकम् कैकेय्यै न्यवेदयत ॥

विशे ॥ अत्रापि यथा वद्वस्तु वर्णनया स्वभावोक्तिः—तल्लक्षणन्तूक्त मेव ॥

*मन्थर इति निकृष्टा; मन्थरानिकृष्टा इति रूपम् भवितव्यम् - तदिह न-गणभङ्गात् - अतः मन्थरा च सा निकृष्टा चेति सामानाधिकरण-विशेषणे न 'मन्थरनिकृष्टा' इति रूपस्य जाति संज्ञावाचकत्वेनोपपन्नत्वात् - पुंवत्कर्मधारयो जातीय देशीयेष्विति पुं वद्भावा पन्नत्वम्-ततो मन्थर निकृष्टा - इत्य दुष्टत्वं रूपस्योपपन्नम् - यद्वा - दुष्टाऽव दद्गुण निकृष्टा च का चन कुचेष्टा च केकय सुता मिति वा पाठः ॥

अव ॥ कैकेयी वाक्य श्रवणानन्तरं दशरथ स्थिति रुपवर्ण्यते :-

**वन्यस्थितिन्तनुज मान्यस्य रामगुणिनोऽन्यस्य राज्यमिति य**
**च्चान्याय्यमाहघनजन्याभिलाष मति शून्येन दत्तमिति तत् ।**
**अन्यो भवामि गुण मान्येभ्य इत्यधिकदैन्योऽपतद्दशरथो**
**प्यन्ये स्वकार्य कृतिदैन्यं समापुरति शून्यात्मकास्सहचराः ॥**

---

खण्डा ॥ तनुजमान्यस्य, रामगुणिनः, वन्य स्थितिम्, अन्यस्य, राज्यम्, इति, यच्च, अन्याय्यम् , आह, तत् , घनजन्याभिलाषमति शून्येन, दत्तम्, इति, गुणमान्येभ्यः, अन्यः, भवामि, इति, दशरथः, अधिकदैन्यः, अपतत्, अन्ये, सहचराः, अपि, अतिशून्यात्मकास्सन्तः, स्वकार्यकृतिदैन्यम्, समापुः ॥

व्याख्या ॥ वन्य इति ॥ तनुजेषु=सुतेषु, मान्यस्य=पूज्यस्य, राम इति गुणी, तस्य, वने भवा वन्या - पाशादिभ्यो यः-इति यप्रत्ययः - वन्या-

---

याम्, पंक्तौ च ॥ इति हैमः - नय=प्रापय - हे ! भ्राजत् = विराजमानम् यशः यस्य तस्य सम्बुद्धौ तथोक्तः - असुरेण=शंबरासुरेण सह, कृता जौ, मम=मह्यम् , नैजप्रदत्तम्=स्वभावेनार्पितम् , वरम् = अभीष्टम् , माम् , गमय=प्रापय, देहीति भावः - नि ॥ वरे जामातरि वृत्तौ देवतादेरभीप्सिते - इत्यमरः - अत्र 'मम नैजप्रदत्त' मिति दानसम्बन्धे चतुर्थी प्रयोक्तव्या तथापि षष्ठ्याः प्रयोगः नैच्य द्योतनाय-भो! राजेन्द्र!=नृपेन्द्र! इह=वरप्रदानविषये, जातु=कदाचिदपि, असत्येन युता च साधीश्चेति तथोक्तया, जल्पदोषम् = वाग्व्ययदोषम् , त्वा=त्वाम् , नोनयतु=न प्रापयतु - इति द्विकर्मकत्वान्नीञः प्रयोगः; वरप्रदानकर्तृकः ॥

भावः ॥ अथ कैकेयी कोपाविष्टा सती राजानमेवमाहः-भो! राजन्! मम सुताय राज्यदानम् तव सुतस्य रामस्य वनवासम्, एतद्वितयम् वरन्देहि; पुरा शंबासुरवधे तावकस्वभावार्पित मिदम् वरद्वयम् , यदिदानीम् तल्लङ्घ्यते तदनृतदोषाय कल्पयेत् - तस्मादनृत दोष वाञ्माभू - रिति दशरथ न्दुःखाब्धौ पातयामासः -

अव ॥ दशरथम्मूर्छित मुपचारै रुपचर्यमाणम् वर्णयति :-

**रे! रे! भटाः! किमिह तारास्समर्प्य नृपवीरञ्च पश्यथ मुधा स्वैरं वितेनु रुपचारांश्चरास्त्विति कुमारोऽगमत्प्रथमजः श्रीरामचन्द्रमरि मारं समीक्ष्य नृपधीरो बभूव विमल श्शूरस्त्ववोचदथ श्रीराघवो नृपमुदारं वचस्सविनयी ॥**

---

खण्डा ॥ रे! रे! भटाः, इह, ताराः, समर्प्य, नृपवीरम्, मुधा, किं पश्यथ? इति, स्वैरम् - चराः-उपचारांस्तु, वितेनुः - ततः, प्रथमजः, कुमारः - अगमत्, नृपधीरः, अरिमारम्, श्रीरामचन्द्रम्, समीक्ष्य, विमलः, बभूव - अथ, शूरः, सः, श्रीराघवः, विनयी, नृपम्, उदारम्, वचः - अवोचत्: -

व्या ॥ रे रे इति ॥ रे! रे! इत्यनुकरण संबोधनार्थः - हे! भटाः! इह = एतस्मिन्विषये, यद्वा समये - ताराः =कनीनिकाः, समर्प्य=दत्वा, नृपवीरम्

---

च सा च स्थितिः - ताम्, अन्यस्य=रामेतरस्य भरतस्य, राज्यम् = साम्राज्यम् - इति, एवम्, यत्, अन्याय्यम्=अधर्म्यम्, आह=कैकेय्यवादीत्, तत्, घनः यः जन्याभिलाषः तद्वता, नि ॥ जन्यम् हट्टे परी बादे संग्रामे च नपुंसकम् - इति विश्वः - मत्वा, शून्यः, तेन च मया तत् = अन्याय्यवाक्यम् - दत्तम् - इति=इत्थम् -गुणैः मान्यः-तेभ्यः, अन्यः=इतरः, भवामि =अस्मि, इति च, दशरथः=अयोध्यापतिः - अधिकम् दैन्यम् यस्य तादृशस्सन् - अपतत्=अमूमुह दित्यर्थः-अन्ये=परे, सहचराः=स्वानुयायिभृत्याः, अपि, शून्यात्मकाः=निर्गतमतयस्सन्तः, स्वकार्याणां, कृतौ दैन्यम् = करणासामर्थ्यम्, समापुः=प्रापुः ॥

भावः ॥ अथ दशरथः, कैकेयी वृतवरश्रवणानन्तरम्-श्रीरामवनवासम्, भरतसाम्राज्यम् - किमिदमहो विपरीतम्; कष्टञ्चा पतितम् - विचारशून्येन मनसा दत्तमिदं वरद्वयम् - यद्यह मिदानीं वरं न दास्यामि सज्जनेभ्य इतरो भवामि। इत्येवं चिन्ताविष्टो भुवि पपात - अथ तदनुगा भृत्या अपि इति कर्तव्यता मूढा स्सन्त स्व स्व कार्यकरण विमूढाः अभवन् ॥

अव ॥ अथ श्रीरामचन्द्र वचनं विशिनष्टि :—

**न्यङ्कूपमाक्ष्युदित सङ्कल्पमाचर, कळङ्कन्तु मानय कुलम्**
**शङ्काञ्जहीहि, तव कैङ्कर्यमेमि; रिपुसङ्कर्ष कोऽस्मिविपिने ।**
**किङ्कार्यमेत दभ यङ्कुर्वतो मम सुखङ्कार्यमेव तदिद**
**न्ताङ्केकयाधिपसुताङ्केवलम्मुनि मुदङ्कुर्वतीं विगणय ॥**

---

खण्डा ॥ न्यङ्कूपमाक्ष्युदित संकल्पम्, आचर, कुलम् - कळङ्कन्तु, मानय, शंकाम्, जहीहि, तव, कैङ्कर्यम्, एमि, विपिने, रिपुसंकर्षकः, अस्मि, अभयंकुर्वतः, मम, एतत्, कार्यम्, किम्, तत्, इदम्, सुखम्, कार्यम्, एव - ताम्, केकयाधिपसुताम्, केवलम्, मुनि मुदंकुर्वतीम्, विगणय ॥

व्याख्या ॥ न्यङ्कूपमेति ॥ भो! जनक! इत्यध्याहारः-न्यंक्वा=कृष्ण-साराङ्गनया उपमा ययो स्ता वक्षिणी यस्या स्तस्यै-नि ॥ कृष्णसाररुरुन्यंकु-रित्यमरः । अत्र न्यंको स्त्रीत्व विवक्षा - हरिणेषु -अङ्गनानामक्षीणि सु विशा-

---

=दशरथम्, मुधा, किं पश्यथ? किमर्थम् दर्शनं क्रियध्वे? इति = एवं वदन्तः- स्वैरम् = यथेष्टम्, चराः = अनुचराः, सेवका इत्यर्थः - उपचारान् = शैत्योपचारान्, वितेनुः = प्रचक्रिरे-ततः = शीतलोपचारानन्तरम् - प्रथ-मजः = अग्रज श्श्रीरामनामा, कुमारः = सुतः, अगमत् = प्रापत् - तम्देशम्प्रति जगामेत्यर्थः - नृपधीरः = धैर्यवान्राजा, अरीणाम्, मारः, तम् श्रीरामचन्द्रम्, समीक्ष्य = दृष्ट्वा, विमलः = प्रसन्नः, बभूव = आसीत् - शूरः = पराक्रमवान्, सः - श्रीराघवः = श्रीश्चासौ रघोरपत्यं पुमांश्चेति तथोक्तः - विनय मस्यास्तीति विनयी - तथोक्तस्सन्, नृपम् = दशरथराज-म्प्रति - उदारम् = औदार्ययुक्तम्, वचः = वाक्यम्-अवोचत् = उवाच - वक्ष्यमाणरीत्येति शेषः - पृच्छार्थ कत्वाद्द्वि कर्मकत्वम् ॥

भावः ॥ अथ दशरथानुचरा मोहङ्गतम् नृपमुपचारैरु पचरन्त आसतेस्म- अत्रान्तरे श्रीरामोऽपि तदुदन्तम् श्रुत्वा सत्वरं तत्प्रदेशमाजगाम - तन्दृष्ट्वा पिताप्यपगत सम्मोहो धैर्यवानासीत् - श्रीरामोऽपि वक्ष्यमाण प्रकारेण पितर-माबभाण ॥

लानीत्यभिप्रायेण - उपमेय भूत कैकेय्या उपमानतया च वक्तुं स्त्रीत्वमेवाश्र-यणीय नित्यल मति विस्तरेण - ( विलोकयन्त्योव पुरापुरक्ष्णां प्रकामविस्तार फलं हरिण्य) इति रघुवंशे द्रष्टव्यं-उदितम्=मन्थरोक्तं, स्वसङ्कल्प श्च - आचर =वरदान माचर, कुलम्=हरिश्चन्द्रादि सत्यवचसां निलयमैक्ष्वाक वंशम् कलङ्कम्, अनृतपापम्, मानय=माप्रापय, द्विकर्मकत्वात्प्रयोगः, शङ्काम्= सन्देहम्, जहीहि=त्यज, तव=ते, कैङ्कर्यम्=किङ्करभावम्, एमि=प्राप्नोमि-सेवक इवाज्ञाम् पालयामि, विपिने=अटव्यामपि, रिपुसङ्कर्षकः=शत्रुविच्छे-दकः, अस्मि=भवामि, अटव्यां वर्तमानोप्यहम् शत्रु निरासको भवेयम्, मातेव्यथामयीति भावः, अभयम्=भयराहित्यम्, कुर्वतः, मम, एतत्कार्यम्, विपिनावासरूपम्, किं=कियदिति प्रश्नार्थक इत्यर्थः, तदिदम् = मात्रा कैकेय्या वृतम्मदीय वननिर् वासनम्, सुखम् = सौख्यप्रदमेव-राज्यभार-मपनीय भार्या सहितोऽयम् सुखेनावास्यता मित्यभिप्रायेणेदम् सौख्यमित्यर्थः, येयम्मम सुखायोद्युक्ताताम्, केकयाधिप सुताम्=कैकेयीम्, केवलम्=मुख्यम्, मुनीनां, मुदम्=सन्तोषम् - कुर्वतीम्=मौनमवलम्ब्या जन्मान्तम् परमर्षयो यं ध्यायन्ति सः श्रीरामरूप परमात्मा वन मेत्य तांस्तोषयतीति बुद्ध्या मुदमिति प्रयोगः-विगणय=सम्भावय ॥

भावः ॥ हे! तात! तावक सङ्कल्पोऽनन्तरायो भवतु अस्मत्कुल मसत्य-दोषेण पापाङ्कितम्माभूत्, ममारण्यावासे भीतिर्नास्ति, सन्देहं त्यज; कियदे-तत्कार्यम्? मुनीनामपीदम् प्रीतिकरम्-मम सौख्यदम् तामेतां वाचं वदन्तीं-कैकेयी मन्यथा माविसम्भावय ॥

विशे ॥ अत्र सर्वे शब्दा स्साभिप्राया इति परिकरालङ्कारः ॥ अल-ङ्कारः परिकरे साभिप्राये विशेषणे - इति ॥

अव ॥ दशरथ कृत कैकेयी सान्त्वन प्रकार उपवर्ण्यते :-

भर्ता भुवो दनुजहर्ता सुते समधिकार्तो रुदन्दशरथ
स्वार्तिं विहातु मतिधूर्ताप्रियानुनयकर्ताऽऽहकेकयसुताम् ।
भर्ता भुवम् भरतमूर्तिस्तदस्तु सुमुहूर्तेऽद्यरामपृथुको
वर्तेत सद्मनि सुकीर्तिस्त्वमेहि भजपूर्तिम् वृतेरितरथा ॥

---

खण्डा ॥ भुवः, भर्ता, दनुजहर्ता, सुते, समधिकार्तः-दशरथः, रुदन्, स्वार्तिम्, विहातुम्, अतिधूर्ता प्रियानु नयकर्तासन्, केकयसुताम् - आह - भरतमूर्तिः - भुवम्- भर्ता - अद्य, सुमुहूर्ते, तत् , अस्तु - रामपृथुकः, सद्मनि, वर्तेत, त्वम्, सुकीर्तिम् - एहि - वृतेः, पूर्तिम् - इतरथा, भज ॥

व्याख्या ॥ भर्तेति ॥ भुवः=भूमेः, भर्ता=नाथः, दनुजहर्ता=शम्बराद्यसुराणाम् विनाशकः-सुते=पुत्र विषये, समधिका आर्तिर्यस्य सः, दशरथः राजा, रुदन्=विलपन्, स्वार्तिम्=स्वमनोगत पीडाम्-विहातुम्=त्यक्तुम्, अत्यन्तं धूर्ता च सा प्रिया च तथोक्ता - तस्या अनुनयकर्तासन्, केकय सुताम्=कैकेयीम्, आह=अब्रवीत्, हे! प्रिये! इत्ययमध्याहार्यः- भरतमूर्तिः, भुवम्, भर्ता=भरिष्यति - भृञ् धातोर्लुटि प्रयोगः - अद्य=इदानीम् - सुमुहूर्ते, तत्=भरतसाम्राज्याभिषेक रूपम्, अस्तु=भवतु, रामपृथुकः=श्रीराम रूपार्भकः - नि ॥ पोतः पाकोर्भको डिंभः पृथुकश्शावकश्शिशुः - इत्यमरः, सद्मनि=गृह एव, वर्तेत=निवासं कुर्यात् , प्रार्थने लिङ्, त्वम्, सुकीर्तिम् =शोभनाम् कीर्तिम्, एहि=गच्छ, इण् गता विति धातो र्लोटि मध्यमैक वचनम् आ+इहीति रूपम्, यद्वा अंस भुवीति धातोः -घ्वसोरेत्थावभ्यासलोपश्चेत्यनेनाप्ये हीति रूपं भविष्यति-वृतेः=वरस्य, पूर्तिम्=पूरणम्, इतरथा अन्यवरस्वीकरणेन, भज=लभस्व ॥

भावः ॥ अथ प्रभुर्दशरथः पुत्रवात्सल्येन व्यथितस्स्वव्यथाम् प्रियानुनयद्वारा अपनेतु मनास्तामाह, अयि! कोपने! भरतस्यैतस्मिन्नेव सुमुहूर्ते-राज्याभिषेकोऽस्तु, श्रीरामचन्द्रस्य सद्मन्यावासं विधत्स्व, तावक वरद्वयपूरणायान्यम् वरमापृच्छस्वेति प्रार्थयामास ॥

अव ॥ कैकेयी दशरथा यात्माभिप्राय मावेदयति युग्मेन :-

**गोपालनाय भुवि शापायुधाद्यखिलता पापहार विधये**
**चापायुधम् निखिल पापाकरासुरसुतापाय रा ममनघम् ।**
**भूपालका! ग्रजमपापं वनं प्रहिणु; पापापनोदन कृता**
**गोपायितैष्यति गतापायिता भरत आपालयिष्यति महीम् ॥**

---

खण्डा ॥ भूपालक ! गोपालनाय, भुवि, शापायुधाद्यखिल तापापहारविधये, निखिलपापाकरा सुर सुतापाय, च, चापायुधम्, अनघम्, अग्रजम्, अपापं, रामं, वनम्, प्रहिणु, पापापनोदन कृता, मही, गोपायिता सती, गतापायताम्, एष्यति-ततः, महीं भरतः, आपालयिष्यति ॥

व्याख्या ॥ गोपालनायेति ॥ हे! भूपालक! = दशरथ! गवाम् = दिशाम्, पालनाय=रक्षणाय, नि ॥ गौ स्स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् स्त्रीसौरभे यीदृग्वाणदिग्वा भूष्वप्सु भूम्नि च ॥ इति मेदिनी ॥ भुवि =भूलोके, शाप एव आयुधः येषान्ते शापायुधाः = ऋषयः - त आदिर्येषामखिलानाम्=समस्तानाम्, मनुजाना मिति शेषः - यस्तापः, तस्य, अपहारविधिः=नाशनकर्म - तस्मै- ऋष्यादिमानवान्तानाम् सर्वेषां ताप विनाशाय च, निखिलपापानां आकराः=पापकराश्च ते असुराश्चेति समासः - तेषाम्, सुतापाय=सुष्ठु शोषणायच, चापः आयुधम्, यस्य तम्, अनघम्=पापरहितकोदण्डपाणि मित्यर्थः - रामम्=सर्वात्मरञ्जकम्, अपापम् = दुरितदूरम्, अग्रजम्=ज्येष्ठपुत्रम्, वनम्=काननम्, प्रहिणु=प्रेषय - पापस्य अपनोदनम्, तत्करोतीति पापापनोदन कृत् - तेन रामेणेत्यर्थः - मही = पृथ्वी, गोपायिता सती=रक्षिता सती, गतः अपायः यस्यास्तत्तां-एष्यति=प्राप्स्यति - भरतः, तन्महीम्, आपालयिष्यति=रक्षिष्यतीत्यर्थः ॥

भावः ॥ अथ कैकेयी - हे! दशरथ! श्रीरामचन्द्रो दनुजसंहरण दक्षः, मुनिजनार्तिभञ्जकः, अतो वने दनुजान्निहत्य दिग्रक्षको भविष्यति यदि मे शिशुर्भरतो गतापायम् साम्राज्यम् पालयिता - अतो रामं वनं प्रापय - इति निष्कपट वचन मुवाच ॥

देवास्तु मे मनुज देवस्सुतो रघुवरो वा समेतु सवने
भावे विनिश्चित मिहाऽवेदिता तव मया वेदनापि पुरतः ।
देवो नयच्छतु मयाऽऽवेदितात्तु वरमेवान्यदार्य! सकल
म्मे वाञ्छितादनृतमेवा परन्त्विति क्रुधा वाचमाह रमणी ॥

---

खण्डा ॥ देव, मे, सुतः, तु, मनुजदेवः, अस्तु, रघुवरः, सः, वने, वासम्, एतु – मया, भावे, विनिश्चितम्; इह, तव, पुरतः, वेदनापि, आवेदिता, हे! आर्य! मया, आवेदितात्तु, अन्यत्, वरन्तु, देवः, न यच्छतु, मे, वाञ्छितात्, अपरम्, अनृतमेव, इति, रमणी, क्रुधा, वाचम्, आह ॥

व्या ॥ देवेति ॥ हे! देव! दशरथ! मे = मम, सुतस्तु = पुत्रस्तु, भरत इति भावः, मनुजानाम्, देवः = प्रभुः, अस्तु = भवतु, भरतो राजाऽस्त्विति भावः - नि ॥ देवं हृषीके देवस्तु नृपतौ तोयदे सुरे-इति हैमः, सः, दिगन्तपरिपालन दक्षः, रघुवरः = श्रीरामः, वने = विपिने, वासम् = निवासम्, एतु = प्रापतु, करोत्वि त्यर्थः, मया, भावे, विनिश्चितम् = निरनायि, इह, तव, पुरतः = अग्रतः, वेदनापि, ममेति शेषः, आवेदिता = ज्ञापिता, हे! आर्य! मया, आवेदितात् = ज्ञापितात्, अन्यत्, वरन्तु, देवः = प्रभुः, भवान्, न यच्छतु = न ददातु, अत्र तु रवधारणार्थः-मे = मम, वाञ्छितात्, = अभिलाषितात्, अपरम् = अन्यत्, अनृतमेव, वरं न दास्यामीत्यनुवादन मेव, इति = एवम्, रमणी = मनोहारिणी कैकेयी क्रुधा = रुषा, वाचम्, आह = प्राह,

भावः ॥ हे! दशरथ! भरतः प्रभुरस्तु; श्रीरामस्य वनवासश्चास्तु-इत्येवमुभयात्मक म्मदभिप्रायः सुनिश्चितः स च विज्ञापितः, एत दन्यत् सर्वं वरदाने अप्रयोजकम् - इत्यमित कोपेन सा कैकेयी दशरथम्प्रत्यवोचत् ॥

---

विशे ॥ अत्र श्रीरामवनवासेन भरत साम्राज्यम् गतापायम्भविष्यतीत्यनुमननादरदार्थक हेतुककाव्यलिङ्गालङ्कारः ॥ हेतोर्वाक्य पदार्थत्वे काव्यलिङ्गमुदाहृत - मिति लक्षणात् ॥

अव ॥ भर्तारं वरयुग्मम् याचन्ती कैकेयीं श्रीरामोऽनुनयति :-

**वत्से जगद्भरविभृत्सान्तवाम्ब! मम सूत्साहदां वनगतिम्**
**सत्सौहृदेन च विधित्सस्यहोऽतिकरुणोत्सेक एव मयि ते ।**
**मत्सोदरो भरतवत्सो भुवोऽद्य भरभृत्सत्वरन्त्विति मुदम्**
**वत्सप्रिये!ऽम्ब! तव हृत्सीम्नि चावह सदुत्साह माह प्रथमः ॥**

---

खण्डा ॥ हे! अम्ब! तव, वत्से, जगद्भरबिभृत्सां, मम, सूत्साहदाम्, वनगतिंच, सत्सौहृदेन, विधित्ससि - मयि, ते, अतिकरुणोत्सेक एव, अहो! हे! वत्सप्रिये! अम्ब! अद्य, मत्सोदरः, भरतवत्सः, सत्वरम्, भुवः, भरभृत्, तव, हृत्सीम्नि, मुदम्, आवह, इति, प्रथमः, सदुत्साहम्, आह ॥

व्या ॥ वत्स इति ॥ हे! अम्ब! जननि! तव=ते, वत्से = अर्भके, भरते, जगतः, भरः, तद्भरणेच्छा, ताम्, मम=मे, सुष्ठु, उत्साहं ददातीति तथोक्ताम्, वनाय गतिः, ताञ्च, सुहृदः भावः, सौहृदम्; सच्च तत् सौहृदञ्च तथोक्तम्, तेन-सत् सौहृदेन - विधित्ससि = विधातु मिच्छसि, मयि-ते= तव, करुणायाः, उत्सेकः = आधिक्यं एव, अहो! इत्याश्चर्यार्थे प्रयोगः-हे! वत्साः प्रियाः यस्या स्तस्या स्सम्बुद्धौ-हे वत्सप्रिये - अम्ब! मातः-अत्र वत्सप्रियेऽम्ब, इत्यकार प्रश्लेषेण संधौ नदोषः - सर्वः प्लुतो विकल्प्यते - इति शास्त्रात्-अद्य=इदानीमेव, मत्सोदरः=मम सोदरः-वत्सश्चासौ भरतश्चेति तथोक्तः, भरतनामार्भकः; भुवः = भूमेः, सत्वरम्, अत्यरम्, भरभृत् = भारवाहकः, स्यादिति शेशः - तव, हृत्सीम्नि = हृदयदेशे, मुदम् = सन्तोषम्, आवह = दधतात् - इति, प्रथमः = श्रीरामः, सदुत्साहम् यथा तथा, आह=कैकेयी मवोचत् ॥

भावः ॥ अथ श्रीरामः - हे! मातः! भरतस्यराज्यभारम्, मम चैकान्त मरण्यावासम् विधित्ससि। अहो! ते मयि करुणातिरेकः!-तावकाभीष्टम् स्वैरं सत्वरञ्च-भवतु - हृदये तूत्साहम् मात्यज - इत्येवङ्कैकेयीमाह ॥

विशे ॥ अत्र स्वस्य वनवासं विधित्संत्याः कैकेय्याः करुणातिशयरूपस्तुतेः कृतत्वाद्व्याजस्तुत्यलङ्कारः ॥ श्लो ॥ निन्दया वास्यया यत्र स्तुतिरेवावगम्यते । स्तुत्यावा गम्यते निन्दा व्याजस्तुति रसौ मता-इति तल्लक्षणात् ॥

अव ।। गुहाचरितश्रीरामपादप्रक्षाळनप्रकार उपवर्ण्यते :-

मन्दाकिनीं तरणसन्दायकेन सुरबृन्दावनो रघुवर
श्शन्दायको व्यतर दिन्दीवराक्ष्यनुजसन्दानित स्तदनु सः ।
वन्दारुकाम्यफलबृन्दन्दिशन्त मरविन्दानुकार ममल
न्तन्देव पाद मतिनन्दा त्प्रमृज्य सुखसन्दोह माप स गुहः ॥

खण्डा ॥ तदनु, सुरबृन्दावनः, शंदायकः, सः, रघुवरः, इन्दीवराक्ष्यनुज सन्दानितः, तरणसन्दायकेन (करणेन), मन्दाकिनीम्, व्यतरत , सः, गुहः, वन्दारु काम्यफल बृन्दम्, दिशन्तम्, अरविन्दानुकारम्, अमलं, तम्, देवपादम् , अतिनन्दात्, प्रमृज्य, सुखसन्दोहं, आप ॥

व्या ॥ मन्दाकिनी मिति ॥ तदनु =गुहाचरितपादप्रक्षाळनानन्तरम्, सुरबृन्दस्य अवनम् करोतीति तदर्थः, शम् =सुखम्, तस्य दायकः =दाता, इत्यर्थः, सः, रघुवरः =श्रीरामचन्द्रः, इन्दीवरे इव अक्षिणी यस्या स्सा-तया, सीतया, अनुजेन =लक्ष्मणेन च, सन्दानितः = संयुतः- नि ॥ बद्धे सन्दानित म्मूर्णं मुद्दितम् सन्दितम् सितम् - इत्यमरः, तरणसन्दायकेन सह = नाविकेन गुहेन सह - मन्दाकिनीम् = गङ्गाम् , व्यतरत् = ततार, अथ, सः, गुहः, वन्दारूणाम् = नमस्कर्तॄणाम् , यत्काम्यं तस्य फलानि तद्बृन्दम् = तत्समूहम्, दिशन्तम् = प्रयच्छन्तम् , अरविन्दम् = तामरसम् , अनुकरोतीति तथोक्तम् , अमलम् =अपापम् , तम्, देवपादम् =श्रीरामचन्द्रचरणं, प्रमृज्य =विशोध्य, सुखसन्दोहम् =सुखपरम्पराम्, आप =प्राप्तवान् ॥

भावः ॥ अथ श्रीरामचन्द्रः जायानुजयुतो गुहसहायेन गङ्गा मवातरत्-गुहोऽपि तद्देवदेवस्य सुन्दरपादारविंदं विशोध्यामितसुख मवाप ॥

---

स्यात् - एकाम्भर्तु मसमर्थोऽह मन्याङ्कथं पोषयिष्ये; अत स्तव पादौ प्रक्षाल्य, गङ्गातटिनीं तारयिष्यामि - इति ॥

विशे ॥ अत्र पादरेणूनां स्वतो युवतिकरणाशक्तत्वेपि शक्ति रस्तीति वर्णना द्विशेषालङ्कारः । श्लो ॥ आधाररहिताधेय मेक स्यानेकगोचरम्, अशक्य वस्तुकरणं विशेषालंकृति स्त्रिधा - इति लक्षणात् ॥



शन्दायको व्यतर दिन्दीवरा क्ष्यनुज सन्दानित स्तदनु सः

अव ॥ श्रीरामचन्द्रस्य भरद्वाजर्षिसन्दर्शन मुपपादयति :-

**हिंसाऽसुरै र्बहुनृशंसाकरे सकलहिंसामृगाढ्यविपिने**
**पुंसा मगम्य मघहिंसात्मकं परमहंसादृतं सुविमलम् ।**
**संसारबन्धनजिघांसारतं वनरिरंसापरो रघुवर**
**श्शंसाऽकरं मुनिवतंसं ददर्श गतमांसश्च कञ्चन मुनिम् ॥**

---

खण्डा ॥ हिंसाऽसुरैः, बहुनृशंसाकरे, सकलहिंसामृगाढ्यविपिने, पुंसा मगम्यम्, अघहिंसात्मकम्, परमहंसाऽदृतं, सुविमलम्, संसारबन्धन जिघांसारतम्, शंसाऽकरम्, मुनिवतंसम्, गतमांसम्, कञ्चन, मुनिम्, वनरिरंसापरः, रघुवरः, ददर्श ॥

व्या ॥ हिंसेति ॥ हिंसा पराश्चैते असुराश्चेति तथोक्ताः - तैः, बहु = अधिकम्, नृशंसानाम् = घातुकानाम्, आकरे = निलयभूते, हिंसाप्रधानाश्च ते मृगाश्चेति, हिंसामृगाः, सकलाश्च ते हिंसामृगाश्चेति, तैः, आढ्ये = युक्ते, विपिने = अरण्ये, पुंसाम् = पुरुषाणाम्, अविज्ञानवता मित्यभिप्रायः - अगम्यम् = अप्राप्यम्, अघस्य = पापस्य, हिंसाऽत्मकम् = नाशकम्, अतिपुण्यवन्त मित्यर्थः, परमहंसैः = परिव्राजकेन्द्रैरित्यर्थः - आदृतम् = लब्धमर्यादम्, सुविमलम् = कळङ्कराहित्ये नाति स्वच्छम्, संसारे यानि बन्धनानि तेषां जिघांसायाम् = नाशनेच्छायाम्, रतम् = आसक्तम्, शंसायाः = प्रशंसायाः, आकरम् = स्थानम्, मुनिषु, वतंसम् = श्रेष्ठम्, गत मांसम् = निर्गत मांसम्-अस्थिगतमांस मित्यर्थः-कंचन मुनिम् = भरद्वाजनामान मेक म्मुनिम्, वने रन्तु मिच्छा - तस्याम् परः = आसक्तः, वनरिरंसा परः, सः, रघुवरः = श्रीरामचन्द्रः, ददर्श = अपश्य दित्यर्थः, तदाश्रमभूमि म्प्रविवेश ॥

---

विशे ॥ गुहस्य योगिनाम प्यगम्यम् श्रीरामपादनिषेवण मत्र फलम्, श्रीरामस्य गङ्गासमुत्तरणम् फलम् - अतस्तयोः परस्परोपकारकभावस्य विद्यमानत्वा दन्योऽन्यालङ्कारः, श्लो ॥ अन्योन्यम् नाम यत्र स्या दुपकारः परस्परमिति लक्षणात् ॥

अथ ॥ श्रीरामचन्द्राय भरद्वाजादेशवर्णनम् :-

**धिन्वन्नृषि न्तमपि शृण्व न्कथा बहुळ मन्वन्तरादिचरिता**
**स्तन्वीसहोदरयुतोऽन्विष्य ता न्वनचरा न्वीतरागमहतः ।**
**धन्वी प्रदेश मनुजान्विष्ट मर्हं मभिमन्वान आसवसति**
**स्तृण्व न्निशाचरचया न्वारय ञ्शुच मथान्वास चित्रशिखरे ॥**

खण्डा ॥ तं, ऋषिं, धिन्वन्, बहुळमन्वन्तरादिचरिताः, कथाः, अपि, शृण्वन्, तन्वीसहोदरयुतः, वनचरान्, वीतरागमहतः, अन्विष्य, धन्वी, अनुजान्विष्टं, प्रदेशं, अर्हं, अभिमन्वानः, आसवसतिः, निशाचर चयान्, तृण्वन्, शुचं, वारयन्, चित्रशिखरे, अन्वास ॥

व्याख्या ॥ धिन्वन्निति ॥ तं = पूर्वोक्तं, ऋषिं = भरद्वाजम्मुनिं, धिन्वन् = प्रीणयन्, आत्मदर्शनेन मुनि मनुगृह्णन्, बहुळानि = अधिकानि, मन्वन्तरादिचरितानि यासु ताः-मन्वन्तरेषु भगवदवतारादि चरिता नीत्यर्थः - कथाः = गाथा अपि, शृण्वन् = श्रवणं कुर्वन्, यतोऽयम्मायामानुषवपुर्धारी तत स्तस्यान्यगाथाश्रवणलालसत्व मित्यभिप्रायः - तन्व्या = सीतया, सहोद-रेण = भ्रात्रा, लक्ष्मणेन च, युतः = युक्तस्सन्, वने चरन्तीति, तान्, वीतो यो राग स्तेन महान्तः-तान्, यद्वा वीतरागाश्च ते महान्तश्च तथोक्ताः-तान्, मुनीन्, अन्विष्य = अन्वेषणं, कृत्वा, धनु रस्यास्तीति - धन्वी = रामः, अनुजेन = लक्ष्मणेन, अन्विष्टं, प्रदेशम्, अर्हं = योग्यं, अभि-मन्वानः = अभिमतं मन्वानः, आप्ता वसति र्येन सः तथोक्तः-निशाचरचयान् = राक्षसनिवहान्, तृण्वन् = नाशयन्, पारिकांक्षिणा मित्यध्याहार्यः - शुचं = दुःखं, वारयन् = निवारयन्, यद्वा स्वयमेव वनवासजं दुःख-मप्रकटयन्, चित्रशिखरे = चित्रकूटपर्वते, अन्वास = अनुल्लत्यासे त्यस भुवि-धातोर्लिट् - उवासेत्यर्थः ॥

भावः ॥ गङ्गानदी न्तीर्त्वा श्रीरामभद्रो घोरासुरमृगाकुलाटव्यां परम पुरुषार्थान्वेषिणं, विगतकल्मषं, संसारबन्धनजिघांसापरं भरद्वाजनामान मार्षं, कंचन महर्षिं ददर्श ॥

अत्र ॥ अथ दशरथस्य स्वर्गप्राप्तिः कथ्यते :-

**योगीश्वरे स्वसुतरागं दधद्बहुळभोगी स कोसलनृपो**
**भागाधिकस्सुतवियोगात्क्रमादधिकरोगाकुलोऽभवदहो!**
**द्रागात्मदेहमतिभोगास्पदं रुगभियोगाज्जहौ दशरथो**
**रागान्मूर्तिं हरिजनकोऽगाद्धरिपदपरागाद्धरेर्युवतिताम् ॥**

---

खण्डा ॥ योगीश्वरे, स्वसुतरागं, दधत् , बहुळभोगी, सः, कोसल नृपः, भागाधिकः, सुतवियोगात् , क्रमात् , अधिकरोगाकुलः, अभवत् - अहो! दशरथः अतिभोगास्पदं, आत्मदेहं, रुगभियोगात् , द्राक्, जहौ - हि - हरेः, जनकः, रागात् , मूर्तिं, अगात् , हरेः, पदपरागात्, दृषत् , युवति तां, अगात् ॥

व्याख्या ॥ योगीश्वर इति ॥ योगीश्वरे=विष्णौ, स्वसुतरागं=स्वपुत्रप्रेम, दधत्=धारणं कुर्वन् , बहुळं, भोगं=सुख मस्यास्तीति तथोक्तः, सः, कोसलनृपः=दशरथः, भागेन=ऐश्वर्येण, अधिकोऽपि = उन्नतोपि, नि ॥ भागं श्रीयोनि वीर्येच्छा ज्ञानवैराग्य कीर्तिषु । माहात्म्यैश्वर्ययत्नेषु धर्मे-मेषेच नारवौ ॥ इति मेदिनी - सुतवियोगात्=पुत्रभूत श्रीरामलक्ष्मण विरहात् , क्रमात् , अधिकेव, रोगेण, आकुलः=व्याकुलः, अभवत् । अहो! इति सम्भावनाद्योतकः - अनेन स्वतो रोगप्राप्तिकारणानां, जरादीनां विद्यमानत्वेपि पुत्रविरहादेव रोगप्राप्तिरित्युपतर्के अहो! इत्यस्य प्रयोज्यकर्त्वं सूच्यते, दशरथः अतिभोगास्पदं = अत्यन्तसुखास्पदमपि, आत्मनः, देहं = शरीरं - रुगभियोगात्=रोगसम्बन्धरूपात् कारणात्, द्राक्=शीघ्रं,-जहौ=तत्याज, तथाहि - हरेः=विष्णुस्वरूपस्य रामस्य, जनकः=पिता दशरथः, रागात्=पुत्रप्रेम्णः, मूर्तिं

---

भावः ॥ अथ श्रीरामचन्द्रः निजदर्शनेन तम्भरद्वाजं तोषयित्वा तेन महर्षिणा बहुळगाथा श्शृण्व न्वने सञ्चरन् , मुनी न्संपश्यन् , निशाचरबला न्यर्दयन् , स्वनिवासयोग्यस्थले चित्रकूटाद्रौ निवसतिस्म ॥

अव ॥ अथ भरतशत्रुघ्नौ भरतमातुलपुरा दयोध्या माजग्मतुरिति :-

**योगम्मृतेः पितुरथागाथदुःख मतिवेगै श्चरै स्सुविदितौ**
**प्रा गात्ममातुलनिजागारगा वधिकवेगा दुपेत्य नगरम् ।**
**प्रागादिसर्व मशुभागाथ मग्रजवियोगञ्च तातमरणं**
**द्रागेव शुश्रुवतु रागामिकार्यविदयोगाद् दुतौ च पृथुकौ ॥**

खण्डा ॥ अथ, पितुः, मृतेः, योगं, अगाथदुःखं, यथा तथा, अतिवेगैः, चरैः, सुविदितौ, प्राक्, आत्ममातुलनिजागारगौ, तौ, पृथुकौ, अधिकवेगात्, नगरं, उपेत्य, प्रागादि, अग्रजवियोगं, तातमरणञ्च, अशुभागाथं, सर्वं, द्रागेव, आगामिकार्यवि दयोगात्, दुतौ सन्तौ, शुश्रुवतुः ॥

व्या ॥ योगमिति ॥ अथ = ततः, पितुः=तातस्य दशरथस्य, मृतेः = मरणस्य, योगं = सङ्गतिं, नि ॥ योगोऽ पूर्वार्थ संप्राप्तौ सङ्गतिध्यान युक्तिषु - वपुस्स्थैर्यं प्रयोगेच विष्कम्भादिषु भेषजे । विस्रब्ध घातकेद्रव्यो-पाय सन्नहनेष्वपि-कर्मणे च-इति मेदिनी- अगाथश्च तद्दुःखञ्च यस्मिन्कर्मणि यद्यथा भवति तथा, अतिवेगैः=अधिकवेगवद्भिः-चरैः=चारैः, सुविदितौ= सुष्टुवेदितारौ, पृथुकौ = भरतश्शत्रुघ्नश्च - प्राक् = श्रीरामवनगमना त्पूर्वं - आत्मनोर्मातुलस्य, निजागारगौ=स्वगृहङ्गतौ, ताविति शेषः - अधिकवेगात् = अतिक्षिप्रं, नगरं = अयोध्याराजधानीं, उपेत्य = एत्य, प्राक् = पूर्वं,

---

मरणं, अगात्=अप्रापत् - हरेः=श्रीरामचन्द्रस्य, पदपरागात्=पादरजसः, दृषत्=काचन शिला-युवतितां=स्त्रीत्वञ्च, अगात्=अगमत् ॥

भावः ॥ परात्मनि भगवति श्रीरामे पुत्त्रभावं विधाय, दशरथः - पुत्त्र विरहासहिष्णुः रोगार्तोऽभवत् । तेन रोगेण भोगायतनं स्वदेहं क्षीणं कुर्वन् पुत्त्रस्मरणपूर्वकमरण मत्रापेति वात्सल्यातिशयः ॥

विशे ॥ अत्र - श्लो ॥ 'एवन्त्वं पुत्त्र शोकेन राजन् कालं करिष्यसी'ति मुनिशापा द्दशरथस्य मरणप्राप्तिरपि पुत्त्रविरहकारणत्वे नोपतर्कितेत्युत्प्रेक्षा-लङ्कारः - साच गम्या ॥

अव ॥ भरतस्य चिन्ताप्रकार उपकल्प्यते :-

**नो रामचन्द्ररहितारामहर्म्यधनभारैः कि मेभि रिति त**
**द्वीराग्रणी भरतवीरो विचिन्त्य रघुवीरस्य काननगतिम् ।**
**आरा त्स्वमातर मभीरुस्समेत्य 'कि मकारि त्वयेद मखिलं**
**भारायितम्मम तु श्रीरामशून्य' मिति सोऽरण्यमार्ग मविशत् ॥**

---

खण्डा ॥ नः, एभिः, रामचन्द्ररहितारामहर्म्यधनभारैः, किं, इति, तद्वीराग्रणीः, भरतवीरः, रघुवीरस्य, काननगतिं, विचिन्त्य, स्वमातरं, आरात, अभीरुः सन्, समेत्य-जननि! त्वया, कि मकारि? मम, तु, श्रीरामशून्यं, इदं, अखिलं, भारायितं, इति, सः, अरण्यमार्गं, अविशत् ॥

व्या ॥ न इति ॥ नः = अस्माकं, एभिः रामचन्द्रेण रहितानि, आराम, हर्म्यं, धनानि चेति कर्मधारयः - तेषां, भारैः = फलादिसहस्रैः, नि ॥ भार स्स्या द्वीवधे विष्णौ फलानां द्विसहस्रके-इति मेदिनी-किं=किम्प्र-योजनं, इति = इत्येवं, तयोः भरतशत्रुघ्नयोः, वीराग्रणीः = वीराग्रेसरः,

---

-आदिः यस्य तादृशः वृत्तान्तः यस्मिन्कर्मणि तत्तथा - आद्यन्तमिति भावः । अग्रजस्य=ज्येष्ठस्य श्रीरामचन्द्रस्य, वियोगं वनवासविरहं, तातस्य=दशरथस्य, मरणं - अशुभागाथञ्च - सर्वं=समस्तं वृत्तान्तं, द्रागेव=क्षिप्रमेव, आगामिकार्यवित् = भाविकार्यज्ञानं - तस्य, अयोगात् = अभावात् - दुतौ =दूनौ सन्तौ, शुश्रुवतुः=श्रवणं चक्रतु रित्यर्थः ॥

भावः ॥ अथ मातुलपुरा त्स्वपुर मागतौ भरतशत्रुघ्नौ श्रीरामचन्द्रवनवासं, दशरथ मरणादिकं सर्वं मशुभवृत्तान्तं चारमुखेन निशम्येति कर्तव्यता मूढौ बभूवतुः ॥

विशे ॥ अशुभागाधं-आङ् पूर्वका द्गाधृधातो र्निष्पन्नः-अगाधशब्दः भावव्युत्पत्तौ आस्पदवाची - कर्तृव्युत्पत्तौ अवस्थापकवाची च - अतोऽशुभस्य - अगाधः श्रीरामराज्याभिषेकभञ्जकत्वात् - दशरथमृतिहेतुभूतत्वाच्च - अयं वृत्तान्तः अशुभस्यास्पदं-अवस्थापकं वा स्या देव ॥

अव ॥ वन ङ्गच्छतो भरतस्य वर्णन मुदाह्रियते :-

**प्रालम्बिकादिकघनालङ्कृती रनुचरालिं विहाय भरतः**
**प्रालम्बिकेशभरजालै विंघट्टितजटालीभि रानतगतिः ।**
**कूलङ्कषामरनदीलङ्घन न्त्वथ सलीलं विधाय गतभी**
**रोलम्बनादितरुजालं समाप सुविशालञ्च रामनिलयम् ॥**

---

खण्डा ॥ भरतः, प्रालम्बिकादिकघनालंकृतीः, अनुचरालिं, विहाय, प्रालम्बिकेशभरजालैः, विघट्टितजटालीभिः, आनतगतिः, अथ, कूलंकषामरनदीलंघनं, सलीलं, विधाय, गतभीः, रोलम्बनादि तरुजालं, सुविशालं, रामनिलयञ्च, समाप ॥

व्याख्या ॥ प्रालम्बिकेति ॥ भरतः, प्रालम्बिका आदि र्यासा न्ताः, घनालंकृतीः=हाराद्यधिकार्घाणि भूषणानि, स्वार्थेक इत्यनेनादेः कप्रत्ययः, यद्वा - प्रालम्बिकादिबहुळालंकृती रिति पाठान्तर मनुसन्धेयम् । नि ॥ स्वर्णैः प्रालम्बिका - इत्यमरः - अनुचराणां, आलिं=समूहञ्च, विहाय = त्यक्त्वा, प्रकर्षेण आलम्बत इति प्रालम्बि, तच्च केशभराणां जालञ्चेति कर्मधारयः, तैः, लम्बमानशिरोजभारै रित्यर्थः । विघट्टिताश्च जटानां आल्यश्च; ताभिः,

---

भरतवीरः = भरतशूरः, रघुवीरस्य = श्रीरामचन्द्रस्य, काननगतिं=वनवासगमनम्प्रति, विचिन्त्य = विचार्य, स्वमातरं, आरात् = कैकेय्याः अन्तिकं, आराद्योगे द्वितीया - अभीरुस्सन् = भयरहित स्सन्, समेत्य = प्राप्य, हे! जननि! इति शेषः, त्वया, कि मकारि=किं कृतम्? हेयमिति भावः, मम तु, श्रीरामशून्यं = श्रीरामरहितं, इदं, अखिलं, भारायितं = भारमि वाचरित म्भवदि - इति = इत्येवं, सः = भरतः, अरण्यमार्गं = श्रीरामानुसृतमार्गं, अविशत् = विवेश - अन्वसर दित्यभिप्रायः ॥

भावः ॥ अथ भरत श्श्रीरामशून्य मिहारामप्रासादादिसर्वं मस्माकं निष्प्रयोजन मिति विचिन्त्य स्वमातरं कैकेयीं दूषयित्वा श्रीरामाश्रवनमार्गं मनुससार; तन्दिदृक्षु र्बभूवेत्यर्थः ॥

अव ॥ श्रीरामंप्रति भरताभ्यर्थनाऽनूद्यते :-

चोरासुरादिनिलयारण्यभूमिषु सदारानुजाग्रजपदे
दूरा त्प्रणम्य स च शूरोऽब्रवी न्नृप मुदारैहि राजनगरीम् ।
श्रीराम! ते विरहभारा दवाप मृति मारा त्स कोसलनृपो
भारायितं जग दसारञ्च मेऽद्य दिश हे! राम! पादुकयुगम् ॥

खण्डा ॥ शूरः, सः, चोरासुरादि निलयारण्यभूमिषु, सदारानुजाग्रजपदे, दूरात्, प्रणम्य, नृपं - अब्रवीत्, हे! उदार! राजनगरीं, एहि, श्रीराम! सः, कोसलनृपश्च, ते, विरहभारात्, आरात् - मृतिं, अवाप, अद्य, मे, जगत्, असारं, भारायित ञ्च, हे! राम! पादुकयुगं, दिश ॥

व्याख्या ॥ चोर इति ॥ शूरः = शौर्यवान्, सः, भरतः, चोराणां, असुरादीनां = राक्षस प्रभृतीनां, निलयः = वासस्थानं य दरण्यं, तद्भूमिषु = वनप्रदेशेषु, दारैः = सीतया, अनुजेन = लक्ष्मणेन सह वर्तत इति सदारा-

---

उपलक्षितः, आनतगतिः = विनमितगमन स्सन्, अथ, कूलं कषतीति कूल-ङ्कषा, सा च अमरनदी चेति तथोक्ता - तस्याः, लंघनं = अतिक्रमणं, सलीलं यथा तथा, विधाय = कृत्वा, गता भीः यस्य सः तथोक्तस्सन्, रोलम्बानां = बम्भराणाम् । नि ॥ रोलम्बो बम्भरश्च सः, इत्यमरः - नादः, तद्वत् - तरूणां जालं यस्मिन् तं, सुविशालं, रामनिलयं = श्रीरामचन्द्रावासम् । नि ॥ निकाय्य निलयालयाः - इतिचामरः - समाप = प्राप्तवान् ॥

भावः ॥ भरतो निजभूषणादिकं, सेवकबृन्दञ्च सर्वं विहाय केशजालै र्विघट्टितजटाभारः अगाधा ङ्गङ्गा मवतीर्य धैर्ययुक्तः, चञ्चरीकध्वनिमात्र-सहाय श्श्रीरामचन्द्राश्रम मगमत् ॥

विशे ॥ अत्र भूषणत्यागेन भरतस्य वैराग्यं, धीरभावोपेतत्वेन तस्य गङ्गा समुत्तरणं, रोलम्बनादि तरुजाल मित्यनेन मानवागम्यारण्य मित्यपि ध्वन्यते-जीवितं व्यङ्ग्यवैभव मिति न्याय मनुसृत्य तत्र तत्र ध्वनिविशेषा निरूपिता इति सर्वं सुस्थम् ॥

अव ॥ भरतकृतश्रीरामप्रार्थना :-

**दक्षो भवा न्भुवनरक्षाविधौ कठिनरक्षोहृदा स्वजननी**
**रूक्षेरणा मम च शिक्षात्मक न्त्ववृत साक्षेपकाम मघदम् ।**
**भिक्षे भवन्त मिह दीक्षां विहाय जनरक्षा ङ्कुरुष्व भगव**
**न्वीक्षे कदा कलुषसुक्षय्य मक्षयसुखक्षेम मित्थ मरुदत् ॥**

खण्डा ॥ हे! भ्रातः! भवान्, भुवनरक्षाविधौ, दक्षः, रूक्षेरणा, स्वजननी, कठिनरक्षोहृदा, मम, शिक्षात्मकं, अघदं, साक्षेपकामं, च, अवृत – हे! भगवन्! इह, भवन्तं – भिक्षे – दीक्षां - विहाय, जनरक्षां, कुरुष्व – कदा, कलुषसुक्षय्यं, अक्षयसुखक्षेमं, वीक्षे – इत्थं, अरुदत् ॥

व्या ॥ दक्ष इति ॥ हे! भ्रातः! श्रीराम! भवान्, भुवनरक्षाविधौ = लोकावनकर्मणि, दक्षः = समर्थोऽसि, रूक्षेरणा = परुषभाषणा, स्वजननी = अस्मन्माता कैकेयी – कठिनं च तत् रक्षोहृत् = राक्षसाना मिव हृदयं, तेन,

---

नुजः–स चासा वग्रजश्चेति कर्मधारयः, तस्य, श्रीरामचन्द्रस्य, पदे = पादौ, दूरात् = दूरादेव, प्रणम्य = प्रणामं कृत्वा, नृपं, अब्रवीत् – हे! उदार! राजन्य! राजनगरीं = राजधानी मयोध्याम्प्रति, एहि = आयाहि, हे! श्रीराम! सः, कोसलनृपश्च = दशरथराजः, अस्मत्पिताऽपि, ते - विरहभारात् = वियोगव्यथाकुलस्स न्नित्यर्थः, आरात् = अनुपदमेव, मृतिं = मरणं, अवाप = प्राप्तवान्, अद्य = इदानीं, मे = मम, इदं सर्वं जगत्, असारं = साररहितं – भारायित ञ्च = भारमि वाचरितञ्च भवति–तस्मात् – हे! राम! पादुकयुगं = पादुकयोरिदं पादुकं, तद्युगं, दिश = मह्यं प्रयच्छ त्व मिति - दिश अतिसर्जन इति धातो श्चतुर्थीं भाव्या ॥

भावः ॥ अथातिभयङ्करारण्ये निवसन्तं श्रीरामं दृष्ट्वा भरतः - भो! भ्रातः! राजधानी मायाहि – अस्मत्पिता त्वद्वियोगेन मृति मप्याप – त्वया विना सर्वं म्मम शून्य मेव–अत स्त्व मुपेहि – न चे त्त्वत्पादुकाद्वन्द्वं वा देही त्यभिवाद्य मुहुर्मुहु रभ्यर्थना ञ्चक्रे ॥

विशे ॥ आरात्पदं सामीप्यबोधकं-सामीप्य ञ्चात्र कालविषयिकं बोध्यम् ॥

अव ॥ भरतप्रार्थनानन्तरं श्रीरामचेष्टाऽभि वर्ण्यते ॥

**या** माह तातमृति मामान्तत स्सपदि रामो निशम्य भरता
द्भीमा मथानुजनिरामान्वितो मनुजसामान्यपैतृकविधिम् ।
धीमा न्यथाविधि निकामं समाप्य गतकामोऽपि राज्यविभवे
श्रीमा न्ददौ करुणधामाऽनुजाय सुखवामाय पादुकयुगम् ॥

---

खण्डा ॥ आं, यां, तातमृतिं, आह, भीमां, तां, आन्ततः, रामः, भरतात्, सपदि, निशम्य, अथ, अनुजनिरामान्वित स्सन्, धीमान्, मनुज-सामान्य पैतृकविधिं, यथाविधि, निकामं, समाप्य, राज्यविभवेपि, गतकामः, श्रीमान्, करुणधामा, रामः, सुखवामाय, अनुजाय, पादुकयुगं, ददौ ॥

व्या ॥ यामिति ॥ आं=एवं, नि ॥ आमेवमित्यमरः, यां, तातमृतिं =दशरथमृतिं, पूर्वोक्त पुत्रविरहादिना प्राप्तां मृति मित्यर्थः, आह=भरतोऽब्रवीत्, भीमां = पित्रभावश्रवणात् भीतिदां, ताम्मृतिवार्ता मिति शेषः - आन्ततः=आमूलाग्रं, रामः, = श्रीरामचन्द्रः, भरतात्, सपदि, निशम्य= श्रुत्वा, अथ = तदनुपदमेव - अनुजनिश्च, रामा च = अनुजनिरामे; ताभ्यां

---

मम, शिक्षात्मकं=शिक्षारूपं, अघदं=पापप्रदं, आक्षेपेण=निन्दया, युक्तः, साक्षेपः, स चासौ कामश्चेति तथोक्तः, तं - अवृत=वव्रे - हे! भगवन्! इह = अत्रवने, भवन्तं, भिक्षे = याचे - दीक्षां = वनवासदीक्षां, विहाय = त्यक्त्वा, जनरक्षां = प्रजावनं, कुरुष्व, राज्यभारं विधृत्य प्रजारक्षण कुर्विति भावः, कदा, कलुषाणि सुक्षय्याणि येन सः तं पापविदूरं । नि ॥ कलुषं वृजिनैनोऽघमंहो दुरितदुष्कृत-मित्यमरः-अक्षयसुखं यत्क्षेमं=मोक्षरूपमङ्गळं यस्य तत्तादृशं त्वां, वीक्षे? पश्यामि? इति भाव्यर्थे वर्तमानप्रयोगः - इत्थं-अरुदत्=रुरोद ॥

भावः ॥ हे! राम! त्वमेव भूभारवहने समर्थः - राक्षसस्वभावेनास्मन्माता मम शिक्षारूपं वरद्वय मवृत-त चे मनसि व्यपोह्य प्रजापालनं कुरु- इत्यहं त्वां भिक्षे, अपिचेदृशपापविनाशकं-मङ्गळं कदाऽहं वीक्षे-इत्येवं भरतः श्रीरामान्तिके रुरोद ॥

अव ॥ अथ भरतस्य नन्दिग्रामगमनं, श्रीरामस्य दण्डकवनप्रवेशश्च कथ्येते -

तेनाग्रजन्मपदद्दानेन तोषितहृद्दानीय तच्च भरत
श्श्रीनाथवर्जित मिहैनोनिधान मिति दीनोऽनवाप्य नगरम् ।
वानेयनन्दिपुरगोनन्दितो भुवन मानन्दय द्रघुवरो
जानक्यनूद्भवयुतो निर्ययौ दनुजधानं स दण्डकवनम् ॥

खण्डा ॥ तेन, अग्रजन्मपददानेन, तोषितहृत् , भरतः, तत्, आनीय, श्रीनाथवर्जितं, इह, एनोनिधानं–इति, दीनः सन् , नगरं, अनवाप्य, वानेय-नन्दिपुरगः, नन्दितः, भुवनं, आनन्दयत् , सः, रघुवरस्तु, जानक्यनूद्भव-युतः, दनुजधानं, दण्डकवनं, निर्ययौ ॥

व्या ॥ तेनेति ॥ तेन=पूर्वोक्तेन, अग्रजन्मनः = श्रीरामस्य सम्बन्धि य त्पदं=चिह्नं, तस्य, दानेन=पादुकादानेन, तोषितं, हृत् यस्य सः तथोक्तः भरतः, तत् आनीय=आ समन्ता न्नीत्वा, शिरसेति शेषः, श्रियः नाथः

---

अन्वितस्सन्=युक्तस्सन्, नि ॥ सुन्दरी रमणी रामा कोपना सैवभामिनीत्यमरः, धीमान् = बुध्दिमान्रामः, मनुजानां य स्सामान्यः, पितुरयं पैतृकः-सचासौ विधिश्चेति तथोक्तः–तं, नि ॥ विधिर्विधाने दैवेचेति चामरः - यथाविधि = विधि मनतिक्रम्य, निकामं - समाप्य=समाप्तिं कृत्वा, राज्यविभवेपि=राज्यै-श्वर्येपि - गतकामः=वीताभिलाषः, श्रीमान् = सीतासमेत श्श्रीरामः इत्यर्थः, करुणरसस्य धाम=करुणधाम, रामः, सुखे, वामाय=प्रतिकूलाय, अनुजाय= भ्रात्रे भरताय, पादुकयुगं, ददौ ॥

भावः ॥ अथ श्रीरामः भरतोक्त पितृमृतिवाक्यं श्रुत्वा तस्मै पित्रे निवा-पाञ्जलीन् पिण्डोदकानि च दत्वा - भरत मनुनयन् स्वस्य राज्यपालनेऽनभिरुचिं प्रकटय न्भरता यात्मपादुकाद्वन्द्व मदिशत् ॥

विशे ॥ अस्मिन्पद्ये 'मनुजसामान्य पैतृकविधि' श्रीमान् , सुखवामाय, इत्यादि शब्देषु साभिप्रायताऽस्तीति कारणा त्परिकरालङ्कारः, तल्लक्षणन्तूक्त-मेव प्रागित्यलम् ॥

श्रीनाथः - तेन, श्लो ॥ त्रेतायां रघुनन्दन इति स्मरणात्, भगवदवताररूप श्रीरामेण, वर्जितं=त्यक्तं, अतएव, इह - अयोध्यानगरं, एनसः = पापस्य, निधानं=स्थानं - इति, दीनः=दैन्यं प्राप्तस्सन्, नगरं=साकेतपुरं, अनवाप्य =अप्राप्य, वानेयानां = शबराणां - शेषे षष्ठी - तत्सम्बन्धि, नन्दिपुरं = नन्दिग्रामं - तद्गच्छतीति तथोक्तः=शबरालय नन्दिग्रामगः, नन्दितस्सन्= तुष्टिं प्राप्तस्सन्, भुवनं=लोकं - रामराज्य मितिभावः, आ=समन्ततः, अनन्दयत्=आनन्दयामासेत्यर्थः - सः, रघुवरः=श्रीरामस्तु, जानक्या, जायया, अनूद्भवेन=सोदरेण लक्ष्मणेन च, युतः=अन्वितः, दनुजधानं=रक्षोबृन्दावासं, दण्डकनाम्ना प्रसिद्धं वनंप्रति, निर्ययौ=निरगादित्यर्थः ॥

भावः ॥ भरत श्श्रीरामार्पितपादुकादानेन सन्तुष्टान्तरङ्गः पापनिधानं भगवद्विहीन मयोध्यापुर मिति नन्दिग्रामे उषित्वा राज्यञ्चिकीर्षु रभवत्। तत श्श्रीरामोपि-निकटेऽयोध्याऽस्तीति शङ्कान्वितो दण्डकारण्यं जगाम ॥

गद्यम्

इति श्रीमद्धयानन पादारविन्द वरिवस्यासादितोभय
कविताकता; श्रीमल्लङ्कोपनामक श्री शिवरामशास्त्रि
तनूजन्मना, श्री सीतारामशास्त्रिणा विरचिते
तत्त्वबोधिन्याख्यव्याख्योपेते
श्रीसीतारामायणे
अयोध्याकाण्डः
समाप्तः

अव ॥ अथ श्रीरामचन्द्रस्य वनवास उपपाद्यते ॥

ओमि त्यनन्यजनसामान्य मार्षगणसोम मगस्त्य मनघं
राम स्तदाऽनुजनिभामान्वितोऽनम दसामान्यरूपविनयः।
काम न्तदाश्रम मसामान्य माप्य रघुरामोऽपि तेन मुनिना
क्षेमानुलापवचनामोदितोऽलभत चामोघशस्त्रनिचयम् ॥

---

खण्डा ॥ ओम्, इति असामान्यरूपविनयः, रामः, तदा, अनुजनिभामान्वितः, अनन्यजनसामान्यं, आर्षगणसोमं, अनघं, अगस्त्यं, तु, अनमत्, असामान्यं, तदाश्रमं, कामं, आप्य, रघुरामः, अपि, तेन, मुनिना, क्षेमानुलापवचनामोदितः, अमोघशस्त्रनिचयं, अलभत ॥

व्याख्या ॥ ओमिति ॥ ओं=एवं; अस्तु, नि ॥ ओ मेवं परम म्मते - इत्यमरः, इति श्रीरामो भरतं प्रेष्य, - तदिद मासन्न मयोध्याया - इत्यन्यतो जिगमिषुरिति - ओमित्यस्यार्थः - रूपञ्च, विनयश्च रूपविनयौ, असामान्यौ = सामान्यजनालभ्यौ रूपविनयौ यस्य सः - परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति परवल्लिङ्गतापत्तिः, रामः=दाशरथिः, तदा=भरतप्रेषणानन्तरमेव- अनुसृत्य जनिः यस्य सः, लक्ष्मणः, भामा=सीता - ताभ्या मन्वितस्सन्, अन्यजना इव सामान्यो न भवती त्यनन्यजनसामान्यः, तं, ऋषीणा मय मार्षः, स चासौ गणश्चेति - तस्य सोमं=चन्द्रवदाह्लादकर मित्यर्थः, अनघं=पापरहितं, अगस्त्यन्तु = तन्नामकमहर्षिं, अनमत्=ननाम, असामान्यं, तस्य अगस्त्यस्य आश्रमं तदाश्रमं = अगस्त्यमुनिनिलयं, कामं=निकामं, नि ॥ निकामानुमतौ काम - मितिचामरः - आप्य=प्राप्य, रघुरामोऽपि=रामभद्रोऽपि, अपिशब्दात् मायामानुष वेषधारी भगवानपीत्यर्थः, तेन=प्रसिद्धेन, मुनिनाऽगस्त्येन, क्षेमस्य, अनुलापः=मिथस्सल्लापः, तद्विशिष्टैः वचनैः, आ समन्ता न्मोदितमनाः = आमोदितस्सन्, अमोघशस्त्रनिचयं=अकुण्ठितास्त्रविततिं, अलभत=प्राप्तवान्, चकारा स्केवलक्षेमानुलापादिकमेव न, किन्त्वस्त्रविततिप्रदानम प्यगस्त्य श्चकारेति संक्षेपः नि ॥ आयुधन्तु प्रहरणं शस्त्र मस्त्र मित्यमरः ॥

अव ॥ श्रीरामस्य दण्डकारण्ये आश्रमनिर्माणप्रकार उपवर्ण्यते :-

ते नात्तबाणनिचये नासुर न्त्वमितमानं विराधकुटिलं
वानेयदुर्मृ कुलानेकपादिक मनूनं निहत्य तरसा ।
दीनावनो मुनिकुलेन स्तुतोऽथ परमानन्द माश्रयविधे
स्स्थानं लतादि सुनिधान म्प्रकल्प्य रघुसूनु श्चकार वसतिम् ॥

खण्डा ॥ तेन, आत्तबाणनिचयेन, दीनावनः, रघुसूनुः, अमितमानं, आसुरं, विराधकुटिलं, वानेय दुर्मृग कुलानेकपादिकञ्च, तरसा, अनूनं, निहत्य, अथ, मुनिकुलेन, स्तुतः, परमानन्दं, आश्रयविधेः, स्थानं, लतादिसुनिधानं, प्रकल्प्य, वसतिं, चकार ॥

व्याख्या ॥ ते नेति ॥ तेन=पूर्वोक्तेन, अगस्त्यद्वारा आत्तः, बाणानां निचयः, तेनेत्यर्थः - दीनानां=आर्तानां, अवनः=रक्षकः, रघुसूनुः=श्रीरामचन्द्रः, अमितमानं=अधिकाभिमानवन्तं, आसुरं, मज्ञाग्रण्, विराधकुटिलं = कपटिनं विराधं, वने भवाः वानेयाः, नद्यादित्वा ढ्क्-दुष्टाश्च ये मृगाः, तेषां कुलानि, अनेकपादिकं=गजादिक ञ्च, तरसा = रंहसा, नि ॥ रंह स्तरसी तु रय स्यद इत्यमरः, अनूनं = निश्शेषं, निहत्य = हत्वा, अथ, मुनिकुलेन = आर्षगणेन, स्तुतः=ईडितः, परमः आनन्दः यस्मिन् कर्मणि त द्यथाभूतं तथा, आश्रयविधेः = निवासस्य, स्थानं = अवकाशं, नि ॥ स्थानं सादृश्येऽवकाशे

भावः ॥ अथ श्रीरामो भरताय पादुके दत्वा ततो दूरेऽयोध्याया वसति रुत्तमेति विचिन्त्य वने गत्वा सानुजकळत्रः अगस्त्याश्रममाप । सोऽपि महर्षि स्तदर्थं मुन्निद्रेन्द्रिय स्तं भगवन्त मर्घ्यादिभि स्सत्कृत्य कुशलादिक मालप्य ततोऽरण्यवासिक्लेशापनोदनचणशस्त्रवितर्ति ग्राहयामास ॥

विशे ॥ अस्मिन् श्लोकेपि गायत्रीमन्त्रादिभूतप्रणव आद्यक्षरतयोक्तः, त्रिकालवेदिना महर्षिणा प्रीतिपात्राय दाशरथये वस्त्वन्तरं विहाय शस्त्रनिचय-समर्पणेन भाविप्रत्यर्थित्वं, राक्षसापशदैः प्रस्पर्धित्वञ्च सूच्यत इत्यलम् ॥

अथ ॥ शूर्पणखावृत्तान्तः कथ्यते :-

सर्वाङ्गसुन्दर मपूर्व निशाचरवधू र्वाञ्छितात्मधवता
निर्वर्ण्य काचन रघूर्वीश्वरं नयनपर्व सुखाय चकमे ।
दुर्वारकाम मदगुर्वी कृतापकृति मुर्वीसुतार्थ मसुरां
निर्वास्य वीतबलगर्वा न्ततान सुख मुर्वीश्वरानुजवरः ॥

खण्डा ॥ काचन, निशाचरवधूः, सर्वाङ्गसुन्दरं, अपूर्वं, रघूर्वीश्वरं, नयनपर्व यथा तथा, निर्वर्ण्य, वाञ्छितात्मधवता सती, सुखाय, चकमे, ततः, उर्वीश्वरानुजवरः, दुर्वारकाममदगुर्वी, उर्वीसुतार्थं, कृतापकृतिं, असुरां, वीत-बलगर्वां, निर्वास्य, सुखं, ततान ॥

व्याख्या ॥ सर्वाङ्गेति ॥ काचन, निशाचरवधूः=रक्षस्स्त्रीः शूर्पणखा, सर्वेषु, अङ्गेषु, सुन्दरं=सौन्दर्यवन्तं, अपूर्वं=मनुष्येषु पूर्व मदृष्टं, रघुषु, उर्वी-श्वरं=राजपदलाञ्छितं, श्लो ॥ राजन्वती स्या दमुनैव भूमि रिति प्रामाणिक-प्रयोगात्, नयनयोः पर्व=उत्सवो यथा भवति तथा ॥ नि ॥ दर्शप्रतिपदो स्सन्धै विषुवत्प्रभृतावपि । पर्व स्स्या दुत्सवे ग्रन्थौ प्रस्तावे लक्षणान्तरे - इति प्रतापः, निर्वर्ण्य=दृष्ट्वा, वाञ्छिता आत्मनः धवता=भर्तृता, यया तादृशी सती, सुखाय

---

स्थितौ वृद्धिक्षयेतरे - इति मेदिनी - लतादीनां सुनिधानं, सुष्टु स्थानभूतं, प्रकल्प्य=निर्माय, वसतिं=आवासं, चकार=अकरोत् ॥

भावः ॥ श्रीराम स्तत्रारण्ये अगस्त्ये नाप्तबाणसञ्चये नातिगर्विता न्विराधादिकुटिलराक्षसान्, वनभवाना माटविकानां दुर्मृगाणां कुलानि, गजतरक्षुक्रोडादीनि च निहत्य तत्र निर्भयप्रदेशे मुनिसन्दोहेन सह परमानन्द ङ्कालम्यियापयिषु स्स्वाश्रयाय योग्यभूता म्पर्णशाला म्प्रकल्प्य तत्रावास ञ्चक्रे ॥

विशे ॥ अस्मिन्पद्ये विराधवध स्संग्रहेण निरूपितः, यद्य प्यस्मि न्रामा-यणे वाल्मीकिरामायणाद्राविव श्रीरामचरितं विपुलतया नोक्तमपि संग्रहेण सर्वस्यापि चरितस्य कथनं विशेषार्थसुखेन, साभिप्रायविशेषणैश्च निरूपितम् । अत श्श्रीरामचन्द्रः पर्णशालाया मुवासेति - संक्षेपे णोक्तिः ॥

अव ॥ शूर्पणखाप्रेरिताः खरादयो युयुत्सव श्श्रीराम मभ्यागताः ॥

**विच्छिन्नघ्राणकृत विच्छित्ति राशरगणाच्छादितोरुविपिन**
**न्तच्छद्मनाऽगम दथोच्छूनशोकमुख माच्छाद्य शूर्पणखिका ।**
**तुच्छ श्चकार क इहेच्छ न्निजासुगणविच्छेदनार्थ मिति तेऽ**
**नच्छा स्त्रिशीर्षखरगुच्छऽसुरास्तु कलहेच्छा स्समापु रुटजम् ॥**

---

खण्डा ॥ विच्छिन्नघ्राणकृतविच्छित्तिः, शूर्पणखिका, अथ, उच्छून-शोकमुखं, आच्छाद्य, तच्छद्मना, आशरगणाच्छादितोरुविपिनं, अगमत् , ते, अनच्छाः, त्रिशीर्षखरगुच्छासुराः, निजासुगणविच्छेदनार्थं, इच्छन् , इह, कः, तुच्छं, चकार, इति, कलहेच्छाः, उटजं, समापुः ॥

व्याख्या ॥ विच्छिन्नेति ॥ विच्छिन्नं, यद् घ्राणं, तेन कृता, विच्छित्तिः =अलङ्कारः, यस्या स्सा शूर्पणखिका=शूर्पणखा - अजा द्यत ष्टाप् - ततः प्रत्ययस्था त्का त्पूर्वस्येदा प्यसुप - इत्यनेन स्वार्थिककप्रत्यया त्पूर्व इत्-अथ=

---

=सौख्याय, चकमे=कामयामास । ततः, उर्वीश्वरस्य=श्रीरामराजस्य, अनुजेषु वरः=श्रेष्ठः लक्ष्मणः, दुर्वारो यः काम स्तज्जन्यमदेन, गुर्वीम् =प्रभूतां, उर्वीसुतार्थं=सीतायै - कृता अपकृति र्यया तां, असुरां=राक्षसीं शूर्पणखां, वीतः बलस्य गर्वः यस्या स्तां, निर्वास्य=व्यपोह्य, सुखं=आत्मनीनानां सौख्यं, ततान=कृतवान् ॥

भावः ॥ पर्णशालायां निवसति श्रीरामे, तदीयसौन्दर्यादिक ङ्कर्णपरम्परया श्रुत्वाऽऽगत्य स्वयं तदीयरूपलावण्यं निरीक्ष्य आत्मनो भर्तृतयाऽऽचकांक्ष । न केवल ङ्कामनापरा-किन्तु सीतायै कृतापकारा च बभूव । तत स्ता मसुरा न्दृष्ट्वा लक्ष्मण स्तस्याः कर्णनासाविच्छेदनं कृत्वा विरूपता मापादयामास । तत आत्मनो भ्रातु स्तज्जायायाश्च सौख्य ञ्चकार ॥

विशे ॥ अत्र श्रीरामचन्द्रस्य लावण्यं, रक्षसाम प्यभिलषणीय मित्यनेन सर्वाङ्गसौन्दर्यवां च्छ्रीरामः कस्यानभिप्रेतो भवति? अपिच राम स्तां स्तिरश्चकारेत्यने नैकपत्नीत्वं, धीरोदात्तत्वञ्च व्यज्यते हि भगवति श्रीरामे ॥

अव ॥ श्रीरामनिहतावशिष्टानि रक्षांसि पलाय्य दशानन मूचुः :-

**तुङ्गै श्शरै स्समररङ्गे तदाऽनुजनिसङ्गेन राम नृपति**
**स्स्वाङ्गेऽश्रमं शिथिलिताङ्गां श्चकार ललिताङ्ग स्स दानवपतीन् ।**
**रङ्गं समाप्य धृतभङ्गा भृशं विकलिताङ्गा दशास्यसविधे**
**सङ्गम्य चोचु रनुजाङ्गावकृन्तन निजाङ्गप्रभेदनविधी ॥**

खण्डा ॥ तदा - अनुजनिसंगेन, ललितांगः, सः, रामनृपतिः - समररंगे, तुंगैः, शरैः - स्वांगे, अश्रमं, दानवपतीन्, शिथिलितांगान्, चकार, अथ, धृतभंगाः, भृशं, विकलितांगाः, ते, रंगं, समाप्य, दशास्य सविधे - संगम्य, अनुजांगावकृन्तननिजांग प्रभेदनविधी च ऊचुः ॥

व्याख्या ॥ तुङ्गै रिति ॥ तदा = योद्धुं यदातेऽसुरा स्समागताः, अनुसृत्य जनिः = जन्म, यस्य सः, लक्ष्मणः, तस्य भ्रातुः, संगेन = सहायेन, ललि-

---

= ततः, अनुपदमेवेत्यर्थः, शोकविशिष्टञ्च तन्मुखञ्च; शोकमुखं, उच्छूनञ्च तच्छोकमुखञ्चेति समासः - आच्छाद्य = पिधाय, तच्छद्मना = शोकच्छलेन, आशरगणैः = रक्षोबृन्दैः - आच्छादितं, आसमन्ता द्व्याप्तं - उरुविपिनं य त्तत्, अगमत् = जगाम - यत्र चतुर्दशसाहस्रिका राक्षसा आसन् तां स्थली मगम दित्यर्थः - ते, अनच्छाः = कलुषाः - नीचा इति यावत् - नि ॥ कलुषोऽनच्छ आविल इत्यमरः - त्रिशीर्षश्च, खरश्च, दूषणश्चेत्यादयो गुच्छाः = गुंफाः - असुराः - तेच ते राक्षसाश्चेति कर्मधारयः - निजानां असूनां गणः - तद्विच्छेदनार्थं, स्वप्राण नाशायेत्यर्थः - इच्छन् = कामयमानः, इह = अस्मदावासस्थले, कः पुमान्, तुच्छं = नीचातिनीचं - स्त्रीभंगरूप मित्यभिप्रायः - चकार = अकरोत् - इति, व्यसनिन स्ते, कलहे = समरे, इच्छा येषा न्ते तथोक्ताः, उत्साहवन्तः, उटजं = श्रीरामस्य पर्णशालां, समापुः = प्रापुः ॥

भावः ॥ लक्ष्मणकृत प्राणविच्छेदनेन नूतनालङ्कारवती शूर्पणखा व्यथातुरा वस्त्रेण मुख माच्छाद्य यत्रासुरा स्स्थिता स्तदरण्य म्प्रविश्य स्वात्मीयेभ्योऽवादी त्सर्वं वृत्तान्तं - तेऽतिमूर्खा दैत्याः खरदूषणत्रिशीर्षादयः प्रगल्भवाग्भिः प्रजल्पन्तः पर्णशाला मभिययु र्युयुत्सवः ॥

अव ॥ कृतश्रवणेन रावणचर्या प्रतिपाद्यते :-

**वन्दारुदैत्यजनबृन्दाधिपै स्समरसन्दानितै स्समुदिता**
**न्ता न्दानवारिकृतनिन्दां स्वसु र्भव ममन्दं निकार मखिलम् ,**
**मन्दायमानमतिनन्दो दशास्यदनुजेन्दु र्निशम्य नितरा**
**म्भिन्द न्निलातल ममन्दात्तरु ड्दनुजसन्दोह मित्थ मवदत् ॥**

खण्डा ॥ वन्दारुदैत्यजनबृन्दाधिपैः, समरसन्दानितैः, समुदितां, तां, दानवारिकृतनिन्दां, स्वसुः भवं, अमन्दं, अखिलं, निकारञ्च, मन्दायमानमतिनंदः, दशास्यदनुजेन्दुः-नितरां - निशम्य, इलातलं, भिन्दन् , अमन्दात्तरुट्, दनुजसन्दोहं, इत्थं, अवदत् ॥

व्याख्या ॥ वन्दार्विति ॥ वन्दारवश्च ते दैत्याश्च = वन्दारुदैत्याः = नमस्कारपरायणा राक्षसाः, विधेया इत्यर्थः-ते च ते जनाः, तद्बृन्दाना मधिपैः,

---

तांगः=सुन्दरविग्रहः, सः, रामनृपतिः=श्रीरामचन्द्रः-समरंगे=संगरदेशेः, तुंगैः=उन्नतैः, शरैः=बाणैः, स्वस्य, अंग=गात्रं, तस्मिन् , अश्रमं=श्रमराहित्यं यस्मिन् य यथा भवति तथा, दानवानां=राक्षसानां, पतीन्=खरदूषणादीन्, शिथिलितांगान्=जर्जरितावयवान् - चकार=अकरोत् - अथ ततः, धृतः भंगः=अवमति यै स्ते तथोक्ताः - भृशं=अत्यन्तं - विकलितानि अंगानि येषा न्ते तथोक्ताः-ते दैत्याः - अवशिष्टा इत्यर्थः - रंगं = समरं - नि ॥ रंग त्रपुणि रंगो ना रागे नृत्तस्थले रणे - इति नानार्थ रत्नमालायां-समाप्य, दश आस्यानि यस्य तस्य रावणस्य, सविधे=अन्तिके, संगम्य = सम्य गत्वा - अनुजायाः=रावणस्वसु श्शूर्पणखायाः, अंगानां - अवकृन्तनं=भेदनं, निजांगानां=स्वेषा मंगानां प्रभेदनविधिश्चेति द्विवचनं - सू ॥ परवल्लिंग द्वन्द्वतत्पुरुषयो - रिति - विदारणप्रकारञ्च, ऊचुः=जगदुः ॥

भावः ॥ श्रीराम स्तत्राटव्यां स्वस्मा यभिद्रुह्यतो राक्षसान् संगरे सौमित्रिसहाय श्शिथिलिताङ्गा न्निशितै श्शरै श्चकार । अथ श्रीरामनिहत दानवबलेऽवशिष्टा राक्षसाः केचन पलाय्य रावणेन सह सम्भन्य शूर्पणखाऽवयवनिकृन्तन पूर्वकात्मावमतिञ्च सरोदन मूचुः ॥

अव ॥ दशमुखचिन्ताप्रकार अभिपज्यते :-

रे! दानवा! विफलवादैः किमेभि रिह रोदोन्तरे कृपणव
त्को दानवावमत मैदम्प्रकार मकरो दल्पसत्त्व मनुजः ।
भो! दुर्बल स्स मम कोदण्डघातकृतखेद ङ्गमिष्यतिः मया
चेदं सुबाहुसुरसूदा त्पुराऽऽप्त मिति खेदङ्गतो दशमुखः ॥

खण्डा ॥ रे! दानवाः, एभिः, विफलवादैः, किं, इह, रोदोन्तरे, अल्प-सत्त्व मनुजः, कृपणवत्, कः, ऐदम्प्रकारं, दानवावमतं, अकरोत्, भो! सः,

=नायकैः - समरे=युद्धे, सन्दानितैः=खंडितैः - दान खंडने इति संपूर्वका दास्थित मिदं क्तान्त रूपं - समुदितां=सम्य गुक्तां, वाच मिति शेषः-यद्वा परेणान्वयः - दानवानां=राक्षसानां, अरिः=शत्रुः, तेन कृता या. निन्दा= गर्हणा - तां तां, स्वसुः=स्वसहोदर्याः, शूर्पणखायाः, पञ्चम्यर्थे प्रयोगः - भवं =उत्पन्नं, अमन्दं=अधिकं, अखिलं=समस्तं, निकारं = पराभवञ्च, मतौ, नन्दः=मतिनन्दः, मन्दायमानः मतिनन्दः यस्य सः तथोक्तः-दशास्य श्चासौ दनुजेन्दुश्चेति दशास्यदनुजेन्दुः=रावणः - नितरां, निशम्य=श्रुत्वा, इलातलं =भूतलं, भिन्दन्=भेदनं कुर्वन्, अमन्दात्तरुट्=अधिकात्त कोपः, दनुजस-न्दोहं=राक्षससमुदायं, इत्थं=एवं, अवदत्=जगाद ॥

भावः ॥ युद्धे श्रीरामेण पराजिता दानवा स्समेत्य रावणं मुहुर्मुहुः प्रणम्य श्रीरामकृत राक्षसनिन्दां, आत्मस्वसुः कृतं निकारञ्च वेदयित्वा रावण मात्तक्रोधं चक्रुः - तेन कोपेन दशास्योपि रोदोन्तरं भिन्दन् प्रळयकाल इव रक्षोलोक मेव माबभाषे ॥

विशे ॥ अत्र द्वितीयपादस्थ निन्दानिकारनिशमनयो स्तृतीय तुरीय-पादस्थ मन्दायमानमतिनन्द इलातलभेदन इत्येताभ्यां क्रमेणान्वयः-अतोऽत्र यथासंख्यालङ्कारो ध्वन्यते - श्लो ॥ यथासंख्यं क्रमेणैव क्रमिकाणां समन्वय इति लक्षणात् ॥

दुर्बलः, मम, कोदंड घातकृतखेदं, गमिष्यति, इदं, मया पुरा, सुबाहुसुरसूदाच्च, आप्तम्, इति, दशमुखः, खेदं, गतः ॥

व्याख्या ॥ रे इति ॥ रे! दानवाः=राक्षसाः! एभिः, विफलवादैः=फलरहितोक्तिभिः, किं? प्रयोजनं कि मित्यर्थः, इह, रोदसोः, अन्तरे=भूम्याकाशमध्यभागे, अल्पसत्त्व श्चासौ मनुजश्चेति विग्रहः - दुर्बलमानवः, कृपणवत् =नीच इव, कः, ऐदम्प्रकारं, दानवानां अवमतं = राक्षसावमानं, अकरोत् =चकार, भो! संबोधनार्थे प्रयोगः, सः, दुर्बलः=बलरहित मानवः, मम, कोदण्डेन यः घातः, तेन कृतं खेदं, गमिष्यति=लप्स्यते, इदं=एवम्प्रकार मवमतं, मया, पुरा=पूर्वस्मि न्काले, सुबाहुनामासुरस्य, सूदात्=नाशाच्च, आप्तं=अवाप्तं, इति=इत्येवं, दशमुखः=रावणः, खेदं=दुःखं, गतः=अवापेत्यर्थः ॥

भावः ॥ अथ रावणः - भो! राक्षसाः! व्यर्थवादै र्नहि प्रयोजनं; कश्चन बलरहितो मनुजजात्युत्पन्नः दानवाना मीदृशावमतिमपि कुर्यात्? स दुष्टः मम बाणप्रहार लक्ष्यो भूत्वाऽतिखेद मचिरेण लप्स्यते; एवं पुरा घ्ययमेव मम सखायं सुबाहुनामान मसुरं जघान; तेनैव मम चातिरुड्जनिता - अयं स्वस्त-पकारो द्वितीयः - इति व्यथा मनुबभूव ॥

विशे ॥ अत्र रावण करिष्यमाणापकारस्य प्रोद्बलकत्वेन सुबाहुनाशरूपापकारोद्घाटनं कृत मिति पूर्वोक्तद्वितीयतृतीय पादार्थरूपस्य वाक्यस्य तुरीयपादार्थरूपकं हेतुत्वेन गम्यमानमिति वाक्यार्थरूप काव्यलिंगालङ्कारो द्योत्यते - श्लो ॥ हेतो र्वाक्यपदार्थत्वे काव्यलिंग मुदाहृत मिति लक्षणात् ॥

अथ ॥ मायामृगागति रिह वर्ण्यते ॥

न्याय्यं विहाय रुरुकायं विधृत्य कमनीयञ्च हाटकमयं
मायी दशाननविधेयः स्त्रियां प्रमदद्दायी जगाम वनम् ।
योऽयं पुरात्मकृतमायादिनाऽतिमहनीये महर्षिसवने
हेयं विधाय हरिणा यापितो जलधितोयं निपात्य तरसा ॥

---

खण्डा ॥ यः, अयं, पुरा, अतिमहनीये, महर्षिसवने, आत्मकृतमायादिना, हेयं, विधाय, तरसा, निपात्य, हरिणा, जलधितोयं, यापितः, सः, मायी, दशाननविधेयः, न्याय्यं, विहाय, हाटकमयं, कमनीयं, रुरुकायञ्च, विधृत्य, स्त्रियां, प्रमदद्दायी सन्, वनं, जगाम ॥

व्याख्या ॥ न्याय्य मिति ॥ यः, अयं=प्रस्तुतागतः पुरुषः, पुरा=पूर्वस्मिन् काले, अतिमहनीये=अति प्रभावयुते, महर्षिसवने=विश्वामित्रयागे, आत्मना कृता या माया, तदादिना, हेयं=असह्यं, विधाय, तरसा=द्रुतं, निपात्य=पातयित्वा, हरिणा=श्रीरामेण, जलधितोयं=समुद्रवारि, यापितः=प्रापितः, सः, माया अस्यास्तीति मायी=मायावान् - दशाननस्य, विधेयः=प्रवृत्तिं निवृत्तिं वा विधातुं शक्यः, रावणाज्ञाकारीति यावत्, मारीचनामाऽसुरः, न्याय्यं=नीतिमार्गं - ऋजुमार्ग मित्यर्थः - विहाय=त्यक्त्वा, हाटकमयं=स्वर्णविकारं, कमनीयं=अत एव मनोहरं - रुरुकायं=सारंगदेहञ्च, विधृत्य=धृत्वा, स्त्रियां=स्त्रीणां, प्रमदं=आनन्दं ददातीति दायी=दूरालोचनशून्याना मबलाना मानन्दकारी सन्, वनं=सीतारामलक्ष्मणोषितं वनम्प्रति - जगाम=ययौ ॥

भावः ॥ पुरा गाधेयकृतसवने योऽय मनीत्या रक्तमांसमेदोवसादिभिः पूतिगन्धैर्हेयं कृत्वा श्रीरामेण ताडितो वारिधौ प्राणावशिष्टो निपातित स्सोऽयं मायी रावणानुचरो मारीच स्स्त्रीणां प्रबलानन्द करमनोहरहाटक मृगरूपं धृत्वा सीतारामलक्ष्मणोषिताश्रमंप्रति जगाम ॥

विशे ॥ अत्र दशाननविधेय स्स्त्रीणामपि प्रमददायीति विशेषणद्वयं रावण करिष्यमाण कार्यबीजोपगर्भितं; अपिचेतः पूर्वं विश्वामित्र यागकाले

अव ॥ मायामृगे सीताभिलाष उपपाद्यते :-

**भामानुजादियुतरामे वने निजहृदामोद मास्थितवति**
**प्रेमादधं स्त्वतनुहेमाभया च रघुरामस्य भूमिजनुषः ।**
**वामस्सचाट दितिजो मायया तदनु सा मानिनी पति महो !**
**रा मान येम मतिप्रेमास्पदं मृगललामं न्त्वि तीत्थ मवदत् ॥**

खण्डा ॥ भामानुजादि युतरामे, निजहृदामोदं, वने, आस्थितवति सति, स्वतनुहेमाभया, रामस्य, भूमिजनुषश्च, प्रेम, आदधन्, वामः, सः, दितिजः, मायया, आट - तदनु, मानिनी, सा, पतिं प्रति - हे! राम! अतिप्रेमास्पदं, इमं, मृगललामं, तु, आनय, इतीत्थम्, अवदत् ॥

व्याख्या ॥ भामेति ॥ भामा=सीता, अनुजः=सोदरो लक्ष्मणः, तौ आदी येषा न्ते आटविकाः, तैः, युतः, असौ रामश्चेति विग्रहः-तस्मिन्, रामे, निजहृदः=स्वान्तस्य, आमोदः=आनन्दं यस्मि न्कर्मणि यद्यथा भवति तथा-नि॥ प्रमोदामोदसम्मदाः - इत्यमरः, वने=अरण्ये, स्वाश्रम इत्यर्थः - आस्थितवति= अनूषितवति सति - स्वतनुहेमाभया=आत्मनोपात्तहिरण्यतनुकान्त्या, रामस्य, भूमिजनुषश्च=सीतायाश्च, प्रेम=हार्दं, आदधन्=प्रकल्पयन्, वामः=सुन्दरः, नि ॥ वामं सव्ये प्रतीपेच द्रविणे चातिसुन्दरे - पयोधरे हरे कामे विद्या द्वामा मपि स्त्रियाम् । इति विश्वः-सः, दितिजः=राक्षसो मारीचः, मायया=शाम्बर्या, आट= इत स्तत श्चचार - तदनु=तदनन्तरसमये, मानिनी = अभिमानवती, सा, सीता, पतिं=भर्तारं प्रति - हे! राम! अतिप्रेम्ण आस्पदं=अतिप्रीतिपात्रं, इमं, मृगललामं=सारंगं, आनय-इतीत्थं=एवंप्रकारेण, अवदत्=जगाद - अहो! इत्यद्भुत सूचकम् ॥

भावः ॥ सीतालक्ष्मणसमेत श्श्रीरामो यत्र वने निवास श्चक्रे, तत्र तयो स्सीताराघवयोः प्रेमादध न्मारीचनामा दनुजो रावणानुचरो हिरण्मयकुरंगरूपं

---

कृतागस स्तस्येदानीं स्वापकारकरणे मृते रन्या शिक्षा नास्तीति चतुर्थपादाभिप्रायेण संसूच्यते ॥

अव ॥ मायामृग चर्याऽभि वर्ण्यते :-

**गोसञ्चयेन धनु रासाद्य रामविभु रासी न्मृगायनगति**
**श्चासन्नसोदर मथासाञ्चकार वरभूसूतिकाऽवनविधौ ।**
**त्रास म्प्रपन्न इव घासं ग्रस न्निव सचासन्नव द्रुरुशिशु**
**र्वासा त्सुदूर ममु मासादय त्स्वतनुभासा कुतूहलकरः ॥**

खण्डा ॥ अथ रामविभुः, गोसंचयेन, धनुः, आसाद्य, मृगायनगतिः, आसीत् , वरभूसूतिकाऽवनविधौ, आसन्नसोदरं, आसाञ्चकार-सः, रुरुशिशुश्च, त्रासं, प्रपन्न इव, घासं, ग्रसन्निव, आसन्नवच्च, स्वतनुभासा, कुतूहलकरः, अमुं, वासात् , सुदूरं, आसादयत् ॥

व्यख्या ॥ गोसंचयेनेति ॥ अथ; रामविभुः=श्रीरामचन्द्रः, गोसंचयेन= बाणसमुदायेन सह, नि ॥ स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले - लक्ष्यदृष्ट्या स्त्रियां पुंसि गौ-रित्यमरः - धनुः, आसाद्य = प्राप्य, मृगस्य, अयनं = वर्त्म, तेन तदनु सृत्य, गमनमस्तीति तथोक्तः - मृगानुसारीति यावत् - आसीत्= बभूव, चकारा दपिच, वरा च सा भूसूतिकाचेति तथोक्ता-तस्याः, अवनविधौ संरक्षणकर्मणि, आसन्नसोदरं = स्वान्तिकस्थितसोदरं लक्ष्मणं, आसाञ्चकार= न्ययूयुज दित्यर्थः, सः, रुरुशिशुश्च= मायामृगोऽपि, त्रासं=भयं, प्रपन्नइव = प्राप्त इव, घासं=बालतृणं, नि ॥ शष्पं बालतृणं घास इति चामरः - ग्रसन्निव =अदन्निव, आसन्नवत्=अन्तिकस्थ इव, स्वतनोः भाः, तया, कान्त्या ॥नि॥ स्युः प्रभारुग्रुचिस्त्विड्भा भाश्छविद्युतिदीप्तय - इत्यमरः - कुतूहलकरः=उत्कण्ठाकारी सन् , अमुं=श्रीरामचन्द्रं, वासात्=आत्मनिलयात् , सुदूरं =बहुदूरं, आसादयत् प्रापयामास ॥

धृत्वा तत्पुरोभागे चिक्रीड - तदनु सीतामानिनी - हे! राम! इम म्मृगललाम म्मह्य मानये त्यभ्यर्थयाञ्चक्रे ॥

विशे ॥ अत्र सीतायाः प्रेमास्पदमृगे वाञ्छासंजातेति द्योतयितुं दितिज इति विशेष्यस्य विशेषणीभूतो वामशब्दः-अत स्साभिप्राय विशेषण विन्यसना त्परिकरालंकारः - तल्लक्षणं तूक्तमेव ॥

अव ॥ अथ श्रीरामो मारीच ममारय दित्युपलक्ष्यते :-

**देवो रुरोः कुटिलभावं समीक्ष्य मृगभावं विहाय विशिखै**
**र्ग्रीवाभिलक्ष्य मथ सोऽवार्यशौर्यनिधि राविद्धबुद्धि रकरोत् ।**
**सोऽवाच्यदेवरिपु राविश्चकार मृतिरावं यदा धरणिजा**
**धावद्धिया तद्दर आवेद्य देवर मथावेशना दगमयत् ॥**

---

खण्डा ॥ अथ, अवार्यशौर्यनिधिः, सः, देवः, रुरोः, कुटिलभावं, समीक्ष्य, मृगभावं, विहाय, आविद्धबुद्धिस्सन्, ग्रीवाभिलक्ष्यं, अकरोत्, अवाच्यदेवरिपुः, सः, यदा, मृतिरावं, आविश्चकार - तदा, धरणिजा, धावद्धिया, तद्दरं, आवेद्य, अथ, देवरं, आवेशनात्, अगमयत् ॥

व्याख्या ॥ देव इति ॥ अथ=तदनन्तरं, अवार्यञ्च तच्छौर्यञ्च तथोक्तः-तस्य निधिः, सः, देवः=श्रीरामः - रुरोः मृगसम्बन्धि-सम्बन्धसामान्ये षष्ठी-कुटिलभावं=कपटशीलं, समीक्ष्य=सम्यग्दृष्ट्वा, मृगबुद्धिं=कुरङ्गोऽयं दयनीय इति बुद्धिं, विहाय त्यक्त्वा, आविद्धा=आहता, बुद्धिः=धीः यस्य सः तथोक्तस्सन्, विशिखैः=बाणैः, ग्रीवा मभितो लक्ष्यं ग्रीवाभिलक्ष्यं,अकरोत् चकार-अवाच्यः =ईदृशोऽयमिति वाचा प्यसंभाव्यः, देवानां, रिपुः=देवरिपुः-अवाच्य श्चासौ देवरिपुश्चेति विग्रहः - सः=मायाकुरंगः, रूपी मारीच इति यावत्-यदा, मृति-

---

भावः ॥ अथ श्रीरामचन्द्र स्सीताप्रार्थनान्तर मात्मेषुधिधनुषी चादाय तद्धेममृगमनुसृत्य गच्छ न्वनस्थसीतापरिरक्षणाय लक्ष्मणं नियोजयामास - सच मायाकुरंगोपि भया क्रान्त इव, तृणादी न्यदन्निव, कञ्चि त्काल मासन्न इवच श्रीरामचन्द्र स्यात्मरुचिभि रौत्सुक्यातिशयकरो निकेतना द्दूरातिदूरं भ्रामय न्नानयत् ॥

विशे ॥ अत्र स्वतो मायामृगस्य शाम्बरीविद्यावत्त्वात् त्रासस्याभावेपि त्रासं प्रपन्न इवेति, घासग्रसनाऽनावश्यकत्वेपि घासं ग्रसन्निवेति, रामसमी-पोपसर्पणोद्देशाभावे प्यन्तिकस्थ इवेति चोत्प्रेक्षणा दुत्प्रेक्षालङ्कारः-सच माला-कारतया चास्थितः ॥ श्लो ॥ संभावना स्या दुत्प्रेक्षा - इति तल्लक्षणात् ॥

अथ ॥ रावणकृत सीतापहरणप्रकार उपपाद्यते :-

**वारे जघान रिपुमारोऽसुरं कुटिलमारीच मल्प मिषुणा**
**धीर स्तदाऽनुजनि रारा दुपेत्य रघुशूरं जगाद निखिलम् ।**
**क्रूरोऽथ रावणसुराराति राश्रमविदूरे स्थिता विति च तौ**
**भीरुं धराजनि मुदारां जहार गतभी रात्मनो मरणदाम् ॥**

खण्डा ॥ रिपुमारः, कुटिलमारीचं, अल्पं, असुरं, इषुणा, वारे, जघान । तदा, धीरः, अनुजनिः, रघुशूरं, आरात्, उपेत्य, निखिलं, जगाद । अथ, क्रूरः, रावणसुराराति:, च, तौ, आश्रमविदूरे, स्थितौ, इति, गतभीः, सन्, भीरुं, उदारां, आत्मनः, मरणदां, धराजनिं, जहार ॥

व्याख्या ॥ वार इति ॥ रिपून्=शत्रून्, मारयतीति=रिपुमारः, शत्रुक्षयकृच्छ्रीरामः, कुटिल श्चासौ मारीचश्चेति, तं, अल्पं, असुरं=दैत्यं, इषुणा=बाणेन, वारे=समुचितसमये, नि ॥ वार स्सूर्यादिवासरे, द्वारे हरे कुब्जवृक्षे बृन्दावसरयोः क्षणे-इति मेदिनी - जघान=अहनत्, तदा तदनुपदमेव, धीरः = धैर्यवान्, अनुजनिः - अनुजो लक्ष्मणः, रघुशूरं=रामं, आरात्=अन्तिकं, उपेत्य = एत्य, निखिलं=समस्तं, जगाद=अवदत्, अथ = लक्ष्मणगमनानन्तरं, क्रूरः=

रावं=मरणकालीननादं, आविश्चकार=आविष्करण मकरो त्तदा, धरणिजा = सीता, धावद्धिया= धावमानहृदा, व्यग्रहृदयेनेति यावत् - तदरं = तदन्तरं - आवेद्य, अथ, देवरं=भर्तु रनुजं लक्ष्मणम् - आवेशनात् अकृतसन्नाहं, यथास्थिति - निलया दित्यर्थः - अगमयत्=तन्मृतिरावागमनदेशं प्राहिणोत् ॥

भावः ॥ श्रीरामचन्द्रो मृगानुसारी सन् कियद्दूरं गत्वा तत्सारंगस्य मायामयत्व मालक्ष्य दैत्यकृत्य मिदमिति शङ्कान्वित स्त मुद्दिश्य धनुषीष्वारोपणं चकार - रामबाण स्यावैयर्थ्या त्तदनुपदमेव बाण स्त म्मायाकुरंग ममार्षीत् - सोऽपि कपटशीलो मारीचः म्रियमाणो घोरारावं प्रादुरयाञ्चकार; तेन रावेण भीता सीता रामरक्षणार्थं लक्ष्मणं निष्ठुरवचनै र्वेश्मनो यथास्थितं निरगमयत् ॥

अव ॥ अथ जटायुषो वृत्तान्तः कथ्यते :-

**स्यान्नामः भूमितनु जोन्नीयते किं? मिति चोन्नद्धकन्धर मभीः**
**खिन्नाञ्च रावणसमुन्नीतमूर्ति मवनुन्नोरुधर्म मसुरम् ।**
**त न्नीच मेक्ष्य हृदि भिन्नो जटायु रथ सन्नह्य तेन समरे**
**छिन्नच्छद स्समुपपन्नव्यथः कुशलभृ न्नासिकासु रभवत् ॥**

खण्डा ॥ अथ, जटायुः, भूमितनुजा, उन्नीयते, किं? स्यान्नाम-इति, अभीस्सन्, उन्नद्धकंधरं यथा तथा, रावणसमुन्नीतमूर्तिं, खिन्नां, अवनुन्नोरु धर्मं, तन्नीचं, असुरञ्च, एक्ष्य, हृदि, भिन्नः, तेन, सन्नह्य, समरे, छिन्नच्छदः - समुपपन्नव्यथः, कुशलभृन्नासिकासुः - अभवत् ॥

व्याख्या ॥ स्यादिति ॥ अथ=रावणकृत सीताहरणानन्तरं, जटायुः= तन्नामा विहगः, भूमितनुजा=सीता, उन्नीयते=उद्धृत्य नीयते, किं? स्यान्नाम =एवंभवेत्? इति काकुः, इति=इत्थं - अभीः=भयरहितस्सन्, उन्नद्धा कन्धरा यस्मि न्कर्मणि तद्यथा भवति तथा, रावणेन समुन्नीता मूर्ति र्यस्या स्तां, खिन्नां=व्यथितां सीतां - अवनुन्नः=व्यपगतः, उरुधर्मः, येन सः तथोक्तः-तं, त न्नीचं = रावणनामानं, क्षुद्रं, असुरं=राक्षसञ्च, एक्ष्य-आ+ईक्षित्वा=सम्य- ग्दृष्ट्वेत्यर्थः - हृदि=हृदये, भिन्नः विदीर्णः, विशीर्णहृ दित्यर्थः - दशरथसखस्य

---

निर्दयः, सुराणां अरातिः=शत्रुः, दैत्य इत्यर्थः, रावण इति सुरारातिरिति सामा- नाधिकरण्यं, चकारा न्न मारीचएव केवलन्द्रोही, किन्तु रावणोऽपि द्रोहीति द्योतयितु मित्यर्थः, तौ=रामलक्ष्मणौ, आश्रमात्=पर्णशालायाः, विदूरे विशेष- दूरप्रदेशे, स्थिताविति; गतभीः=निर्भीकस्सन्, भीरुं=भयशीलां, उदारां = औदार्यगुणवतीं, आत्मनः=स्वस्य, मरणं ददातीति=मरणदां, धराजनिं=सीतां, जहार=हृतवान् ॥

भावः ॥ श्रीरामचन्द्र स्तदवसरे कपट म्मारीचं बाणेन यदाऽहन तदा लक्ष्मण स्तत्प्रदेश माजगाम । तत स्स रावणहतक स्तौ राघवा वाश्रमा दतिदूरे स्थिता विति विज्ञाय निर्भयं भाविनि काले स्वस्य मरणदां सीता माहरत् ॥

अव ॥ मारीचमरणानन्तरं रामलक्ष्मणाश्रमप्रवेश उपपाद्यते :-

धीर स्स रामनृपशूरोऽपि लक्ष्मणकुमारं विलोक्य चरमं
मारीचवाक्य मपकारायित न्त्वनुजवीरा न्निशम्य; हृदये ।
दाराऽशुभ न्दनुजवारापकार मपि मारीचकैतवरुता
दूरं विचिन्त्य रघुशूरो जगाम निजदारोज्झितोटज मरम् ॥

खण्डा ॥ सः, रामनृपशूरः, धीरोऽपि, लक्ष्मणकुमारं, विलोक्य, चरमं, मारीचवाक्यं, अपकारायितं, तु, अनुजवीरात्, निशम्य, हृदये, मारीचकैतवरुतात्, दाराऽशुभं, दनुजवारापकारं, अपिच, दूरं, विचिन्त्य, निजदारोज्झितोटजं, रघुशूरः, अरं, जगाम ॥

व्याख्या ॥ धीर इति॥ सः = मारीचवधकारी, नृपेषु शूरः, राम इति नृपशूरः, धीरोऽपि = धैर्ययुक्तोऽपि, लक्ष्मणनामककुमारं = बालं, अनुजबुद्ध्या कुमार इति प्रयुक्तः, यद्वा दशरथकुमारेषु, लक्ष्मणनामानं कुमार मिति वा-विलोक्य = दृष्ट्वा, चरमं = मरणकालोद्भवं, मारीचवाक्यं = मारीचाक्रोशरूपं - 'हासीते! हा

जटायुषः श्रीरामवैरी शत्रुतया भाव्यः - अतोऽयं शत्रु रिति भावः-यथाह कामन्दकः-अरि मित्र मरे र्मित्रं मित्रमित्र मतः परम् । अथारिमित्रमित्रञ्च विजिगीषोः पुरस्सराः-इति - सन्नह्य = तेन सहकृते समरे, छिन्नाः छदाः यस्य सः तथोक्तः - समुपपन्ना व्यथा येन स इति विग्रहः - कुशलं = सीताक्षेमं, बिभर्तीति, कुशलभृत्, नासिकाया मसवः यस्य सः तथोक्तश्च, अभवत् = बभूव ॥

भावः ॥ अथ रावणकृत सीतापहरणानन्तरं जटायु र्नाम विहगो दशरथसखः सीताकृतविलाप माकर्ण्य, परित्यक्तधर्म मसुरं रावणञ्च वीक्ष्य तेनसह युयुत्सु रभवत्-ततो बली रावणः तं पक्षच्छेदसंजातव्यथ मकार्षीत्-सच जटायु श्श्रीरामाय सीतावृत्तान्तं विवक्षु र्नासिकाधृतासु र्बभूव ॥

विशे ॥ स्वत स्सुजनो जटायु र्दशरथसख इति विशेषबुद्ध्या रावणेन प्रतियोद्धु मुद्युक्तो बभूव; अतोऽत्र महतां स्वत उपकारबुद्धे स्स्थितत्वा त्प्राणत्यागमपि परोपकाराय कुर्वन्तीति वस्तु व्यज्यते-स चाविवक्षितवाच्यध्वनिः ॥

अव ॥ पर्णशालां प्रविष्टयो श्श्रीरामलक्ष्मणयो स्सीताऽदर्शनस्थितिः ॥

**मा**निन्यपेतरुचिहीनालयं सदपदानौ निरीक्ष्य हृदये
दूना वुभौ सपदि मौन म्प्रपद्य गतमानौ ततो मुमुहतुः ।
स्वेनानुभाव्य मिह नूनं स्वकर्मफलमानं क्षिता विति रघो
स्सूनू स्थितौ बलनिधानौ व्यथाकुलितदीनौ विचिन्वतु रहो! ॥

खण्डा ॥ सदपदानौ, मानिन्यपेतरुचिहीनालयं, निरीक्ष्य, हृदये, दूनौ, उभौ, सपदि, मौनं, प्रपद्य, गतमानौ, मुमुहतुः-ततः, रघोः, सूनू, इह, क्षितौ, स्वकर्मफलमानं, स्वेन, अनुभाव्यं - नूनं-इति, बलनिधानौ-व्यथाकुलितदीनौ, स्थितौ, विचिन्वतुः - अहो!

---

लक्ष्मण!' इति वाक्यम्, अपकारायितम् = अपकारभूतम्, अपकारशब्दस्य क्यङ्क्तान्तौ, असमयेऽय माज्ञा मुल्लङ्घ्यागत-इति हेतुना, तु-तद्नु, अनुज-वीरात् - लक्ष्मणात्, विशेष्यपूर्वपदकर्मधारयः - निशम्य = श्रुत्वा, गतवृत्तान्तं सर्वं मिति शेषः - हृदये = बुद्धौ, मारीचकैतवरुतात्, दाराणा मशुभम्, दारशब्दस्य नित्यबहुवचनपुंलिंगत्वा त्तथा निर्देशः, दनुजानां वारः समूहः, नि ॥ वारो बृन्दावसरयोः क्षणे-इति मेदिनी - तस्मै रामेण करिष्यमाणापकारम्, अपिच, दूरम्; बहुळ मिति भावः, विचिन्त्य = मनसि चिन्तयित्वा, निजस्य = आत्मनः, दारैः = भार्यया, उज्झितम् = त्यक्तम्, उटजम् = पर्णशालाम्प्रति-नि॥ उटजोऽस्त्री पर्णशाला - इत्यमरः - अरम् = क्षिप्रम्, रघुशूरः = श्रीरामचन्द्रः, जगाम = अगमत् ॥

भावः ॥ श्रीरामचन्द्रो मारीचं निहत्य यदा गृहाभिमुखोऽभव त्तदा लक्ष्मणरूप माविरास । तदनु तम् दृष्ट्वा - अहो! मारीचकृतकपटरोदनवाक्य म्ममापकारभूत ङ्कि मिति विचिन्त्य, लक्ष्मणमुखा त्सर्वं निशम्य स्वदारापकारादिकं सर्व म्मनस्येकदा प्रत्यक्षीकृत्य, दारशून्य माश्रम मतित्वरितगतिनाऽविशत्॥

विशे ॥ अत्र मायामानुषोऽपि श्रीरामः लक्ष्मणदर्शनानन्तरम् सर्वं मित्थं भविष्यतीति यथा मेने तथा सर्वं म्बभूवेति वचना दस्य परात्परत्वं श्रीरामचन्द्रस्येति व्यज्यते ॥

अव ॥ सीतान्वेषणे जटायुदर्शनं, स्वकळत्रचरित्रश्रवणं, जटायुर्मुक्तिश्च कथ्यन्ते-

हित्वोटज न्त्वनुज मित्वा करे मनसि मत्वा वधूकृत मिनो
गत्वा वना द्वन मटित्वा सतीसरणि मित्वा स काननतले ।
श्रुत्वाऽखिलं विगतसत्त्वा त्खगा द्विदिततत्त्वा त्कळत्रचरितं
कृत्वा तदन्त्य मथ दत्वाऽऽत्तधाम कृपया त्माट काननभुवः ॥

खण्डा ॥ सः इनः, उटजं, हित्वा, अनुजन्तु, करे, इत्वा, मनसि, वधू-कृतं, मत्वा, वनात्, वनं, गत्वा, काननतले, सतीसरणिं, इत्वा, अटित्वा,

व्याख्या ॥ मानिनीति ॥ सत् अवदानं ययो स्तौ - रामलक्ष्मणौ, मानिन्याः=सीतायाः, अपेतेन=अपगमेन रुचिनाहीन श्चासा वालयश्चेति कर्मधारयः-तं, निलयं, निरीक्ष्य=दृष्ट्वा, हृदये=मनसि, दूनौ=व्यथितौ, उभौ= रामलक्ष्मणौ, सपदि=तत्समये, मौनं=मूकभावं, प्रपद्य=प्राप्य, गतः अभिमानः ययो स्ता विति विग्रहः - सन्तौ, मुमुहतुः=मोहं जग्मतुः-ततः=किञ्चित्का-लानन्तरं, रघो स्सूनू = रामलक्ष्मणौ, सम्बन्धार्थे षष्ठी-इह=अस्यां, क्षितौ= भूम्नि, स्वस्य कर्मणः फलस्मानं = प्रमाणं - स्वेन - आत्मना, अनुभाव्यं = भोक्तव्यं - नूनं = निश्चयः-इति=एवं-बलनिधानावपि=बलोपेतावपि, व्यथया= दुःखेन, आकुलितौ; दीनौ - अत्र दीनशब्द स्त्वितरेतरद्वन्द्वे प्रयुक्तः - स्थितौ, विचिन्वतुः=अन्वेषयामासतुः - अहो! अतिकष्टंहि ॥

भावः ॥ आश्रमप्रवेशानन्तरं रामलक्ष्मणौ सीताविरहितया कान्तिशून्य मालयं निरीक्ष्य व्यथातुरौ कंचित्काल म्मौन माप्य मुमुहतुः-तत स्तौ द्वावपि- 'अवश्य मनुभोक्तव्यं कृतं कर्म शुभाशुभ' मिति समाधाय सीतान्वेषणतत्परौ बभूवतुः ॥

विशे ॥ अस्मिन् श्लोके व्यथातुरौ रामलक्ष्मणावपि विचिन्वतुः - इति भगवदवतारपुरुषावपि व्यथातुरा विति समर्थनीयस्य वाक्यस्य - स्वेनानुभाव्य मिह नूनं स्वकर्मफलमान - मिति न्यायेन समर्थितत्वा दर्थान्तरन्यास स्संसू-च्यते - तथापि प्राधान्येन सीतान्वेषणरूपवस्तुनो विवक्षितत्वा त्तेन विवक्षित-वाच्यवस्तुना अविवक्षितार्थान्तरन्यासरूपालङ्कारो ध्वन्यत इति वस्तुनाऽ-लङ्कारध्वनिः ॥

अव ॥ रावण स्सीता माहृत्याशोकवनिकायां स्थापयामास ॥

धि ग्रावणं पिशितभुग्राट् तदा जनकजाऽग्रे निपात्य विहगं
व्यग्रो हि याम्यदिश मग्राहय द्रथ मुदग्रो हरार्पितवरः ।
निग्राहकोऽतिकृपणाऽग्रेसरोऽसुरगणग्रामणी र्जनकजा
मुग्रासुरीवृतवनाग्रे न्यवेशय दनुग्राहसाधकधिया ॥

खण्डा ॥ तदा, उदग्रः, हरार्पितवरः, पिशितभुग्राट्, जनकजाग्रे, विहगं, निपात्य, व्यग्रस्सन्, रथं, याम्यदिशं, अग्राहयत्, तं, रावणं - धिक्-

---

विगतसत्त्वात्, विदिततत्त्वात्, खगात्, अखिलं, कळत्रचरितं, श्रुत्वा, अथ, तदन्त्यं, कृत्वा, कृपया, तु, आत्मधाम, दत्वा, काननभुवः, आट ॥

व्याख्या ॥ हित्वेति ॥ सः इनः=प्रभु श्श्रीरामः, उटजं = पर्णशालां, हित्वा=त्यक्त्वा, अनुजन्तु=लक्ष्मणन्तु, करे=हस्ते, इत्वा = प्राप्य, मनसि= हृदये, वधूकृतं=वध्वा भार्यया, कृतं लक्ष्मणप्रेषणादिकं, मत्वा=संभाव्य, वनात् =अरण्यात्, वनं=विपिनान्तरं, गत्वा, काननतले = कान्तारे, सतीसरणिं= निजकळत्रमार्गं, इत्वा=गृहीत्वा, अटित्वा=अटनंकृत्वाच, विगतं सत्त्वं बलं, यस्यतस्मात् - नि ॥ सत्त्वं गुणे पिशाचादे बले द्रव्यस्वभावयो - रिति मेदिनी- विदितं तत्त्वं येन तस्मात्, खगात्=विहगात् चटायुषः, अखिलं, कळत्रचरितं =भार्यावृत्तान्तं, श्रुत्वा निशम्य, अथ, तस्य=जटायुषः, अन्त्यं=अन्त्यकर्म, कृत्वा=विधाय, कृपया तु=दयया तु, आत्मनः=स्वस्य, परमात्मन इत्यर्थः - धाम=स्थानं, सायुज्यरूपतुरीय पुरुषार्थं, दत्वा, काननभुवः = विपिनभूमीः, आट, अट गता विति धातो र्लिटि रूपं - विचचारेत्यर्थः ॥

भावः ॥ अथ दाशरथिः पत्नीवियोग मसहमानः तयाऽधीरया कृतानि परुषाणि च, फलानि च वाक्यानि स्मारं स्मारं, तदन्वेषणा यानुजकरालंबनो वनमार्गेण प्रतस्थे-मध्ये पथं निकृत्तपक्षं, रुधिरार्द्रगात्रं, पितृसखं जटायुषं वीक्ष्य तस्मा त्स्वजायावृत्तान्तं विदित्वा, सपदि गतासवे तस्मै सकरुण मौर्ध्वदैहिकं विधाय तदुक्तदिशा विपिनतलेषु भूयो विचचार ॥

विशे ॥ मुमूर्षुणापि जटायुषा यावद्वृत्तान्तकथन मवस्थितमिति कथनेन जटायुषः परोपकारपारम्यं, सौहृदपरमावधिश्च सूच्यते ॥

अव:।। श्रीरामकृत चिन्ताप्रकार उपनिबद्ध्यते ॥

**योऽकेन क्रूरमृगलोकातिभीकर मनेकासुरोरुविपिनं**
**काकुत्स्थवंशशुभराकाशशी निहतकाकासुर स्समचरत् ।**
**लोके कळत्रकृतशोकाकुलेन रघुतोकेन विस्फुट महो !**
**नैकां प्रवृत्ति मपि शेकेऽवगन्तु मभिमाकल्यतो जनकजाम् ॥**

---

खण्डा ।। यः, काकुत्स्थ वंशशुभराकाशशी, निहतकाकासुरः, अकेन, क्रूरमृगलोकातिभीकरं, अनेकासुरोरुविपिनं, समचरत्, कळत्रकृतशोकाकुलेन,

---

अथ, निग्राहकः, अतिकृपणाऽग्रेसरः, असुरगणग्रामणीः, जनकजां, अनुग्राह-साधकधिया, उग्रासुरीवृतवनाग्रे, न्यवेशयत् ॥

व्याख्या ॥ धिगिति ॥ तदा=सीतापहरणसमये, उदग्रः=उद्धतः, हरेण =शंभुना, अर्पितः=दत्तः वरः यस्य सः तथोक्तः - पिशितं=मांसं, भुञ्जतीति, पिशितभुजः=राक्षसाः, तेषां, राट्=रावण इत्यर्थः, जनकजायाः, अग्रे, विहगं =जटायुषं, निपात्य, व्यग्रः=द्रुतगतिस्सन्, रथं=स्यन्दनं, याम्यदिशं=दक्षिण-दिशं, अग्राहयत्=ग्राहयामास हि - तादृशं रावणं, धिक् - अथ, निग्राहकः= रामादीनां निग्रहकारी, अतिकृपणानां=अतिनीचानां, अग्रसरः=प्रथमः-असु-रगणेषु, ग्रामणीः=श्रेष्ठः, दशास्यः, जनकजां=सीतां, अनुग्राहस्य, साधिका या धी स्तया - सीतानुग्रहाभिलाषिबुद्ध्या, उग्राश्च ता आसुर्यश्च, ताभिः, वृतं य द्वनं, तदग्रे=तस्य प्रान्तभागे - न्यवेशयत्=प्रवेशयामास ॥

भावः ॥ रावण स्सीता मपहृत्य गच्छन् मध्ये पथ मभियुयुत्सुं जटायुषं पक्षयो र्हत्वा, हरवरगर्वितो दक्षिणां दिश मास्थायागमत् -तत स्सीता मशोक-वनिकायां राक्षसीभि रावृताञ्च स्थापयामास ॥

विशे ।। पुरा किल दशानन श्शङ्कर मुद्दिश्यासाध्यधर्मै स्तप स्तेपे-तेन तुष्ट श्शंभु र्दशास्याय वरा न्दित्सु राजुहाव । तथाऽपि रावणो नोपरराम-शम्भुश्च तत्कृतपुण्यराशिं, स्वदातव्यवस्तुनिचयञ्च तुलाया मितस्तत उपन्यवेशयत् । तथाऽपि शिवः कृतकृत्यो न बभूव-पुन स्त्रिलोकैश्वर्यञ्च-रजताचलादिक मतुल्यं सर्वं निवेशयामास - ततोऽपि शङ्करो नपारयामास - तदनु रावण स्समीक्ष्य दैन्याननं शिवं परिमितवस्तुग्रहणेन तोषयामास-ततः परितुष्ट श्शिवो रावणाय सर्वदाह मकुटिलस्य रक्षक स्ते-मा भैषीः-इति वरं ददा विति कथाऽत्रानुसन्धेया ॥

अव ॥ अथ कबन्धवृत्तान्त उपश्लोक्यते :-

**योऽपारकाननचरापात्मको रघुवरोऽपायकृद्वनभुवां**
**शापायुधार्पितमहोपायनादिक मवापानवाप रमणीम् ।**
**चापायुधौ हि मुनिकोपात्तदानववपुरूपः कबन्ध इति य**
**स्सोऽपास्तधी हृदयतापाविला वनुजभूपौ बबन्ध भुजयोः ॥**

खण्डा ॥ अपारकाननचरापात्मकः, वनभुवां - अपायकृत् , यः, सः, रघुवरः, शापायुधार्पितमहोपायनादिकं - अवाप - रमणीं - अनवाप - मुनि-

तेन, रघुतोकेन, विस्फुटं यथा तथा, जनकजा मभि, एकामपि, प्रवृत्तिं, लोके, साकल्यतः, अवगन्तुं, न शेके, अहो ॥

व्याख्या ॥ य इति ॥ यः, काकुत्स्थवंशएव समुद्रः, तस्य शुभा या राका, तस्यां शशी, निहतः काकासुरः येन सः, श्रीरामः, अकेन=दुःखेन, क्रूराश्च ते मृगाश्च, तेषां लोकेन=प्रपञ्चेन, अतिभीकरं=अतिभयङ्करं, अनेके असुराः यस्मिं स्तत् , उरुविपिनं=महारण्यं, समचरत्=विचचार - योऽय मेवं व्यचर तेन, कळत्रकृतशोकेन=सीताहेतुकदुःखेन, आकुलः=व्याकुलः, तेन, रघुतोकेन =रघोरपत्येन, रामेणेत्यर्थः - विस्फुटं=विस्पष्टं यथा तथा, जनकजा मभि = सीताम्प्रति, लोके=विश्वे, एकामपि, प्रवृत्तिं=वार्तां, नि ॥ वार्ता प्रवृत्ति र्वृत्तान्त उदन्त स्स्यात् - इत्यमरः, साकल्यतः=सामग्र्येण, अवगन्तुं=बोद्धुम्, नशेके= अशक्तता, भावे प्रयोगः ॥

भावः ॥ य श्श्रीरामचन्द्रः क्रूरमृगाटवी मानत श्चरन्नपि यत्र कुत्रापि स्वात्मपत्नीवार्ताङ्किञ्चिदपि नाश्रुणो त्सोऽयं श्रीरामः कळत्रकृतशोकातुरोबभूव॥

विशे ॥ अत्र काकुत्स्थवंशशुभराकाशशी; निहतकाकासुर इति विशेषणद्वयविशिष्टोऽपि श्रीरामः क्रूरमृगाकुलाटव्यां दुःखेन विचचारेत्यत्र कळत्रकृतशोकातुरस्य सर्वं दुःखमय म्भवति-अपि श्रीरूपा सीता; तादृशीं गृहश्रिय मप्राप्तस्य; व्यथाऽति महतीचेति वस्तु व्यज्यते - अतोत्र व्यङ्ग्यमर्यादया वस्तु-प्रतीतिः-यद्वा साक्षाल्लक्ष्मी सीता - विष्णु श्श्रीरामः-विष्णो रेषाऽनपायिनी - इत्यादिपौराणिक वाक्यानुरोधेन नित्यानपायिन्या लक्ष्म्या वियोगः क्षणमात्रम प्यनिर्वचनीय दुःखसंजकः - किमुत बहुकालावधिक इतिच ध्वन्यते ॥

अव ॥ कबन्धमुखा त्सीतावृत्तान्तनिवेदनरूप मुपवर्ण्यते ॥

**प्रत्यर्थिभूतदनुजोऽत्यर्थ मात्मगतरीत्याऽऽवयो र्व्यसनिनोः**
**प्रत्यक्षमेव तनुतेऽत्याहित ङ्किमिति सोऽत्यन्तकोपहृदयः ।**
**धृत्या प्रदह्य कृतकृत्योऽभव द्रघुसुतोऽत्यन्त मात्मसुदती**
**प्रत्यागतेः करण मत्युत्तम न्तदनु प्रीत्या विवेद दनुजात् ॥**

खण्डा ॥ सः, धीरः, अनुजशूरं प्रति, अरे! लक्ष्मण! नः, राक्षसाधमकृतैः, अतिगहनाः, विपदपाराब्धयः – आगताः - पुनः, इह, कः, राक्षसः, अस्ति – इमं, सुरारिं, जहि - इति – अब्रवीत् - दनुजवीरः, क्रूरः, बलात्, प्रहर्तुमनसं, तं - आह - हे ! राम! मां, दह, तव, नारीप्रवृत्तिं, वच्मि ॥

व्याख्या ॥ न इति ॥ सः, धीरः=धैर्ययुक्तः–श्रीरामः, अनुजेषु, शूरः; तं – लक्ष्मणं प्रति, अरे! लक्ष्मण! नः=अस्माकं-राक्षसा श्च ते अधमाश्चेति - राक्षसाधमाः - तेभ्यः कृतैः, अतिगहनाः=बहुदुःखदाः, विपद एवापाराब्धयः =विपत्पयोराशयः, आगताः= प्राप्ताः; पुनः=भूयः - इह=अत्र, कः, राक्षसः, अस्ति? इमं=एनं, सुरारिं=असुरं, जहि=मारय - इति=इत्थं, अब्रवीत्=जगाद- तदनु, क्रूरः, दनुजवीरः=वीरराक्षसरूपी कबन्धः – बलात् - प्रहर्तुं मनः यस्य तं रामं आह=प्राह – हे ! राम! मां - दह-अहं, तव=ते, नारीप्रवृत्तिं=कळत्र-वार्तामपि - वच्मि=वक्ष्ये - भावे वर्तमानप्रयोगः ॥

भावः ॥ अयि! सोदर! लक्ष्मण! इतः पूर्वमेव राक्षसमूलाः पुनः पुन रस्माकं, विपत्परंपरा स्समायाताः - कोऽयं राक्षसाधमः पुन रस्मा न्बाधते? जहीम मिति श्रीराम स्सोदर माह – ततो रामं क्रूरः कबन्ध एव मवादीत् - हे ! राम! मां, दह - तदन्वहं-ते जायावृत्तान्तं प्रवक्ष्ये ॥

विशे ॥ पुरा किल कश्चन गन्धर्वः निजशाम्बरीविद्यया स्थूलशिरस स्मुनिं निकषा विचरन् तस्य तपोभंग मकरोत् - तदा स मुनिः जातरुट् त मभिशप्तवान् - तदनु तेन प्रार्थितोपि स्तस्मै शापावसानवर न्नददौ – अरे! त्व मेतदा घनेन विकृताकारेण विचरानेकाटवीजनपदान् - यदा श्रीर मलक्ष्मणाभ्यां त्वं विगतासु स्तदा निज रूपं लप्स्यसे - यदि स महात्मा तव दाहक्रियादिकुर्या त्तदा पूर्वस्मृति रप्यभविष्यत् - इत्यतो मां दहेति वचनञ्च बभाण ॥

अव ॥ श्रीरामसुग्रीवसख्यम्प्रति कवन्धोपकारः कथ्यते ॥

चोरेण रावणसुरारातिना जनकजा राम! राक्षसपुरीं
स्वैरं त्वनायि दिशमारा द्यमस्य घनवाराशिवेष्टितभुवि ।
शूरोऽस्ति कश्चन सुदूरे कपी रविकुमार स्स नेष्यति तूर्णी
त्वा राघव वायः कृतधी अग्नि शाक्षिके सख्य मेऽस्तु त्रिजगतिः ॥

खण्डा ॥ हे! राम! चोरेण, रावण सुरारातिना, जनकजा, यमस्य, दिशं, आरात्, घनवाराशिवेष्टितभुवि, राक्षसपुरीं, स्वैरं, अनायि-हे! राघव! सुदूरे, कश्चन, शूरः, रविकुमारः, कपिः, अस्ति - सः, तूर्णीं, त्वा - नेष्यति,

---

खण्डा ॥ प्रत्यर्थिभूतदनुजः, अत्यर्थं, आत्मगतरीत्या, व्यसनिनोः, आवयोः, अत्याहितं, प्रत्यक्षमेव, तनुते - किं - इति-अत्यन्तकोपहृदयः, सः, धृत्या, प्रदह्य, अत्यन्तं, कृतकृत्यः, अभवत् - तदनु - आत्मसुदतीप्रत्यागतेः, अत्युत्तमं, करणं, दनुजात्, प्रीत्या - विवेद ॥

व्याख्या ॥ प्रतीति ॥ प्रत्यर्थिभूत श्चासौ दनुजश्चेति विग्रहः - शत्रुरूपोऽय न्दानवः - अत्यर्थं =अत्यन्तं, आत्मनि गता या रीतिः=पद्धतिः, तया - व्यसनंययो रस्तीति व्यसनिनौ - तयोः, आवयोः=नौ, अत्याहितं=अत्यन्तापकारं, प्रत्यक्षमेव, तनुते=कुरुते - किं? इति, अत्यन्तं कोपः यस्मिं स्तादृशं हृदयं यस्य सः तथोक्तः - सः, रघुसुतः = श्रीरामः - धृत्या=धैर्येण, प्रदह्य = कवन्धं दग्ध्वा, अत्यन्तं, कृतकृत्यः = कर्तव्यकर्मा, अभवत्=बभूव - तदनु =तदनन्तरं, आत्मनः सुदत्याः=पत्न्याः, प्रत्यागतेः=प्रत्यागमनस्य, अत्युत्तमं, करणं=साधनं, दनुजात् कवन्धात्, प्रीत्या=प्रेम्णा, विवेद=जज्ञे ॥

भावः ॥ कोऽयं शत्रुरूपदनुजोऽस्माकं प्रत्यक्षमेवापकार ङ्करोति? आवयोस्तु व्यसन मापतितं - स्वतएव व्यसनिनो रावयोः कोऽय म्बाधः - पुन रापतितः-इतीत्थं तद्वचनानुसारेणैव तद्देहं ददाह-तदनु सः दनुजो निजरूपं गांधर्वं धृत्वा रामलक्ष्मणयो स्सीतावृत्तान्त माह - जज्ञे च राघवः ॥

विशे ॥ अत्र श्लोके कवन्धस्य श्रीरामकृतशापावसानस्य - कवन्धेन श्रीरामचन्द्रस्य दयितावृत्तान्त निवेदनस्य च परस्परोपकार्योपकारकत्वं विद्यत इति हेतो स्त्रान्योन्यालङ्कारः ॥ श्लो ॥ अन्योन्यन्नाम यत्र स्या दुपकारः परस्परमिति लक्षणात् ॥

अव ॥ अथ शबरीसेवाप्रकार उपलक्ष्यते ॥

**दत्त्वा च मोक्ष मसुरत्वा त्सुरूप मपि श्रुत्वा कपीशवसति**
**न्त्वत्साऽनुजं सपदि [illegible] तत्र [illegible] द्रवुन्नतः ।**
**स्थित्वा निकुञ्जभुवि गत्वाऽऽश्रमं [illegible] न्त्वमोऽहृदयो**
**भूत्वा शबर्यतिथि [illegible] न्यान्तं [illegible] ॥**

अय, आशु, शापनिहतेः, कृतधीः, अस्मि-ते, विनतिः, अस्तु ॥

व्याख्या ॥ चोरेणेति ॥ हे! राम! चोरेण, रावणनाम्ना सुरारातिना = राक्षसेन, जनकजा=सीता, यमस्य=अन्तकस्य, दिशि, आरात् = दक्षिणस्या दिश स्समीपे - वनेन वाराशिना, वेष्टिता या भूः, तस्यां स्थितां, राक्षसपुरीं =लङ्कां, स्वैरं=यथेच्छं, अनायि=प्रापिता-हे! राघव! सुदूरे=नातिदूरे, कश्चन शूरः, रविकुमारः=सुग्रीव इति, कपिः=प्लवगः, कपिः + रविकुमार इत्यत्र 'रोरीति' पूर्वस्याणो दीर्घः - अस्ति - सः, सतीं = तव जायां, त्वा, नेष्यति= आनयिष्यति-अय=गच्छ; अय गता विति धातो र्लोटि मध्यमैकवचनं - आशु =द्रुतं, शापनिहृतेः=मच्छापावसानात्, कृतविषयिका धीः यस्य सः तथोक्तः- कृतज्ञ इत्यर्थः - अस्मि, ते=तुभ्यं, विनतिः=प्रणामः - अस्तु=भवतु ॥

भावः ॥ हे! राम! रावणनामा राक्षसो जनकजा मादाय याम्यदिशि सागरवलयितां लङ्कानाम्नीं नगरी मनयत् । त्व मित स्सुदूरं गच्छ-तत्र रवि-सुत स्सुग्रीवनामा कपि र्विद्यते-तेन ते सख्यं भूयात् - मच्छापवसानं कृतवा स्तव कृतज्ञोऽहं वन्दे - इति कवन्ध श्श्रीराम मब्रवीत् ॥

विशे ॥ पुरा किलाहल्याजनक स्तनयापरिणय ञ्चिकीर्षु स्स्वयंवर न्तस्याः प्रकाशयां चकार । हल्य न्नाम हलभावं=वक्रभावं - त दस्यां नास्ती त्यर्थेऽहल्या-अत इय मतिसुन्दरी-एतस्या स्स्वयंवराय येन्द्रादिदेवता महर्षयश्च समाजग्मुः-तदनु सभामालोक्याहल्या पिता - भूप्रदक्षिणं सप्तघटिकापरिमिते समये कुर्वते पुरुषपुङ्गवा येमा न्दास्या मीत्यवोचत् । तदा देवेन्द्र ऐरावत मारुह्यप्रतस्थे-अत्रान्तरे गौतममहर्षि स्त्रिमुखगां प्रदक्षिणफलं लब्ध्वा ता मुपयेमे-तत इन्द्र आगत्य मायाकुक्कुटो भूत्वा प्रत्युषसि स्नानार्थं गतं गौतमं, विज्ञाय महल्याञ्च दृष्ट्वा सञ्ज्ञया सूर्येण साकं तस्याः कळेबरे रेमे - तयो र्वीन्द्रयो स्सुग्रीववालिना वुभौ संजाता वित्याश्चर्यरामायण कथाऽत्रानुसन्धेया ॥

अव ॥ पंपासरोवरम्प्रति रामलक्ष्मणागमनं कथयति ॥

**यां पावनी मिति निलिम्पा विगाह्य प्रविलुप्य न्त्यघं सुसलिलै**
**स्तां पापहां स्वसुखसम्पादिनी ममलपम्पाख्या म्प्रययतुः ।**
**शम्पालताऽभजलसम्पादिनीं सततसम्पातिदिव्यकमलां**
**तां पावनीं मनुगतं पारं मेत्य सुखसम्पादकौ बभवताम् ॥**

खण्डा ॥ यां, अति पावनीं, निलिम्पाः, विगाह्य, सुसलिलैः, अघं, प्रविलुपन्ति- पापहां, स्वसुखसंपादिनीं, तां, अमलपम्पाख्यां, प्रययतुः, शम्पालताभजलसम्पादिनीं, सततसम्पाति दिव्यकमलां, तां, पावनीं, अनु, गतं, पारं, एत्य, सुखसम्पादकौ, अभवताम् ॥

---

खण्डा ॥ रघुसुनः, असुरत्वात्, मोक्षं, सुरूपमपि, दत्वा, कपीशवसतिं, श्रुत्वा, सपदि, अनुजं, धृत्वा, सत्त्वाकुलं, वनं, अटित्वा, श्रमात्, निकुंजभुवि, स्थित्वा, धृतमहत्वान्, आश्रमान्, गत्वा, प्रमोदहृदयस्सन्, शबर्यतिथिः, भूत्वा, तदन्नं, अत्त्वा, दयालुः, अमृतत्वं, अदिशत् ॥

व्याख्या ॥ दत्वेति ॥ रघुसुनः=श्रीरामः, असुरस्य भावः = असुरत्वं - तस्मात्, मोक्षं, सुरूपमपि=सुन्दररूपञ्च, दत्वा-कबन्धायेति शेषः-कपीनां ईशः, तस्य वसतिं=निवासं, तत्कबन्धमुखात्-श्रुत्वा, सपदि=तत्काले, अनुजं =सोदरं लक्ष्मणं, धृत्वा=अवलम्ब्य - सत्त्वाकुलं=क्रूरमृगाकुलं, वनं = विपिनं, अटित्वा=चरित्वा, श्रमात्=भार्या न्वेषणजातश्रमेण - निकुंजभुवि=लतापिहितोदरायां भुवि, स्थित्वा, धृतं महत्त्वं यै स्तान्, आश्रमान्=महर्ष्याश्रमादीन्, गत्वा, प्रमोदयुक्तं हृदयं यस्य सः तथोक्तस्सन्, शबर्याः अतिथिः, भूत्वा, तदन्नं=तद्दत्त फलादिकं, अत्त्वा=भुक्त्वा, दयालुः=दयास्वभावः, अमृतत्वं = मोक्षं - शबर्यै - इत्यर्थः - अदिशत्=ददौ ॥

भावः ॥ तदनु श्रीरामचन्द्र स्तत्कबन्धस्य राक्षसत्वमोचनं, सुरूपञ्चापि दत्वा, तस्मा त्सुग्रीवनिवासादिकं विदित्वा, भ्रात्रयुक्तो विचरन्, मुन्याश्रमादीन् समीक्ष्य सन्तुष्टान्तरङ्ग श्शबर्या दत्त मन्नं भुक्त्वा तस्यै मोक्ष मदिशत् ॥

विशे ॥ अस्मिन् श्लोके स्वभावरूपवर्णन स्योक्तत्वा त्स्वभावोक्ति रलङ्कारः ॥ श्लो ॥ स्वभावोक्ति रसौ चारु यथाव द्वस्तुवर्णन मिति लक्षणात् ॥

अथ ॥ श्रीरामलक्ष्मणकृत किष्किन्धापुरीदर्शन मिह कथ्यते ॥

**त्राता भुव स्सुखविधाता नृणां जनकजातार्थ मुद्धृतमना**
**श्शीतातपादिसमुपेताटवी मसुरजातानुपङ्गकलुषाम् ।**
**पूतां विधाय हृदि वीतान्यसक्ति स्थ सीतानुबद्धधिषण**
**स्सीतापतिः कलितचेतोमुदं प्लवगपूता न्ददर्श नगरीम् ॥**

खण्डा ॥ अथ, भुवः, त्राता, नृणां, सुखविधाता, जनकजातार्थं, उद्धृतमनाः, शीतातपादि समुपेताटवीं, असुरजातानुषंगकलुषां, पूतां, विधाय, हृदि, वीतान्यसक्तिः, सीतानु बद्धधिषणः, सीतापतिः, कलितचेतोमुदं, प्लवग-पूतां, नगरीं, ददर्श ॥

व्याख्या ॥ यामिति ॥ यां, अतिपावनीं=बहुपवित्रां, निलिंपाः=देवाः, विगाह्य =स्नात्वा, सुसलिलैः=पवित्रोदकैः, अघं=पापं, प्रविलुंपंति=अपनुदन्ति-पापं हन्तीति=पापहां, स्वस्य, सुखसंपादिनीं=सुखसंपादनकरीं, तां, = पूर्वोक्तां, अमला च सा पंपापगा चेति कर्मधारयः, तां, प्रययतुः=जग्मतुः – तौ=राघवौ, शम्पालता=विद्युत्-तस्याः आभेव आभा यस्य तादृशजलसम्पादिनीं=जलस-म्पन्नां, अतिधवळजला मित्यर्थः-सततं, अम्पारि=प्रवहत्, दिव्यं कमलं यस्या स्तां - तां, पावनीं=पूतां, पंपानाम्नीमापगां, अनु=अनुसृत्य, गतं, पारं=तीरं, अनूपसर्गयोगे द्वितीया - एत्य=प्राप्य, सुजनेनादकौ=गुणानुभवौ, अभवतां = बभूवतुः ॥

भावः ॥ यस्या म्महर्षयो देवाश्च स्नानादिनाऽघरहिता बभूवु स्ता मतिपवित्रां, पुण्यसलिलां, पंपानदी म्प्रति राघवा वाजग्मतुः-अतिस्वच्छोदकायाः पम्पायाः पार मनु रामलक्ष्मणौ सीतान्वेषणोदितश्रमापनोदनपरौ चाभवताम् ॥

विशे ॥ अत्र निलिंपादीनां पापापनोदिनीं शंपालताभजला मिति चोक्तत्वा त्पंपायाः पवित्रत्वं, तज्जलस्यारोग्यसंपादकत्वञ्च ध्वन्यते - अत स्तौ राघवा वपगत सीतान्वेषणश्रमौ च बभूवतु रित्यलं । अपिच पंपाशब्दः-आपगा-त्वेन - रामायणे - किष्किन्धाकाण्डे तृतीयसर्गस्थ सप्तमश्लोके - इमां नदीं शुभजलां शोभयन्तौ तरस्विनौ - इति नदीवाचकः - केचि त्सर इत्यूचुः ॥

व्याख्या ॥ त्रातेति ॥ अथ = अनन्तरं, भुवः=धरण्याः, नि॥ भूस्थानमात्रे कथिता धरण्यामपि योषिति - इत्यमरः - त्राता=रक्षकः, नृणां = मनुजानां, सुखविधाता=सौख्यकारी, जनकजातायै - तदर्थं, उद्धूतं मनः यस्य सः उद्धूत-मनाः=उत्कण्ठितबुद्धिः, शीतं, आतपश्च, शीतातपौ तदादिना, समुपेताच साऽटवी च, तां, असुरजातानां, अनुशीन कलुषां, तथोक्तां, ता मरण्यानीं, पूतां=पवित्रां, विधाय = कृत्वा, हृदि = मनसि, अन्यस्मिन् सक्तिः - वीता अन्यसक्ति र्यस्य सः तथोक्तः - सीताया मनुबद्धा धिषणा यस्य सः—सीतानु-बद्धधिषणः, सीतापतिः=श्रीरामः, चेतसः मुत्=चेतोमुत् - कलिता चेतोमुत् यथा सा चेति बहुव्रीहिः प्लवगैः=कपिभिः, पूतां=पवित्रां, नगरीं=किष्किन्धा-पुरीं, ददर्श - अद्राक्षीत् ॥

भावः ॥ श्रीराम स्सीतान्वेषणपरो राक्षसावासेन कलुषिता मटवीं पूतां कृत्वा मनसि सीताविचारं विनाऽन्यविचाररहित श्चेतोमोददायिनीं किष्कि-न्धानाम्नीं नगरी न्ददर्श ॥

विशे ॥ श्लोकोऽयं तकारादिनात्वारब्धः, गायत्रीमन्त्रान्ते - यात्-इति तकारोऽस्ति किल! तत्तकारस्य चतुर्विंशत्यक्षरे ष्वपरिगणनेपि ओंकारवत् विपु-लकथारचने प्रबलावश्यकत्वा दत्र तदर्थं विशिष्य श्लोको विरचितः॥

गद्यम्॥ इति श्रीमद्धयाननपादारविन्द वरि वस्यासादितोभय कविता
वता; श्रीमल्लंकोपनामक श्री शिवरामशास्त्रि तनूजन्मना;
श्री सीतारामशास्त्रिणा विरचिते - तत्त्व-
बोधिन्या स्वव्याख्योपेते श्री सीता-
रामायणे अरण्यकांड
स्समाप्तः ॥

अव॥ ऋश्यमूकाद्रिस्थ स्सुग्रीवो राघवौ दृष्ट्वा भीतस्स न्नाञ्जनेयं प्रैषयत्।

ओ ङ्काररूपसद्नाङ्क स्समस्तजनपङ्कापहो रघुपति
स्स्वा ङ्कामिनीं प्रति सशङ्क श्चर न्कपिपुराङ्के यया वभिगिरिम्।
य ङ्कातरो रविसुतोऽङ्क ङ्गिरे रधिवस ङ्कोसलाधिपसुता
वङ्के समीक्ष्य धृतशङ्कोऽनय न्नयविद ङ्कीश माशुगसुतम्॥

खण्डा॥ ओंकाररूपसद्नांकः, समस्तजनपंकापहः - रघुपतिः - स्वां, कामिनींप्रति, सशंकः, चरन्, कपिपुरांके, गिरिमभि, ययौ - कातरः, रविसुतः - यं, गिरेः, अंकं, अधिवसन्, कोसलाधिपसुतौ, अंके, समीक्ष्य, धृतशंकः, नयविदं, आशुगसुतं, कीशं - अनयत्॥

व्याख्या॥ ओङ्कार इति॥ ओङ्काररूपं सदनं अंकः यस्य सः तथोक्तः- श्रीरामस्य परमात्मत्वा दोंकारनिलय इति यावत्-'ओ मिति ब्रह्म प्रसौति'-इति श्रुतेः - समस्तजनानां पंकं अपहन्तीति समस्तजन पंकापहः - सर्वजनाघक्षयकारीत्यर्थः - रघुपतिः=श्रीरामचन्द्रः - स्वां=निजां, कामिनींप्रति = जायां सीतांप्रति - शंकया=भीत्या सह वर्तत इति सशंकः, चरन्=अटन्, वने इति शेषः - कपीनां पुरस्य अंके=समीपे - नि॥ अंको रूपकभेदाग श्चिह्ने रेखाजिभूषणे, रूपकाशान्ति कोत्संगस्थानेऽकं पापदुःखयो-रिति मेदिनी-गिरिमभि =ऋश्यमूकाद्रिमभि, ययौ=जगाम - कातरः=भयशीलः, अग्रजा द्वालिनो भीत इत्यर्थः - रविसुतः=सूर्यपुत्र स्सुग्रीवः - यं - गिरेः - अंकं = उत्संगं - अधिवसन्=अधितिष्टन्, कोसलाधिपसुतौ=रामलक्ष्मणौ, द्वितीया - अंके= अन्तिके, समीक्ष्य=दृष्ट्वा, धृतशंकः = आत्तसंशयः - नयविदं = नीतिशास्त्र वेत्तारं; आशुगसुतं=वायुपुत्रं, कीशं=कपिं हनुमन्तं - अनयत्=अप्रापयत् - प्राहिणो दित्यर्थः - नीञः द्विकर्मकत्वा त्प्रयोगः॥

भावः॥ परमात्मस्वरूप स्समस्तजनदुरितापहारकोऽपि श्रीरामो निजपत्नी मन्विष्यान्विष्य किष्किन्धानगर मारात् स्थितस्य ऋश्यमूकाद्रे रभिमुखो भूत्वा ययौ - स्वावासमूनं तद्गिरि मभ्यायांतौ राघवौ दृष्ट्वाऽतिभीत स्सुग्रीवो हनुमन्तं तत्समीपं प्राहिणोत्॥

अत्र ॥ हनुमता रामलक्ष्मणवृत्तान्तावेदन मुपनिबद्ध्यते ॥

**तद्राघवौ दनुजविद्रावणा वनिलजो द्रा क्सुपृच्छ्य कुशलं**
**भद्रौ च का विह सरौद्रौ गभीरमुखमुद्रौ युवा मिति वदन् ।**
**क्षुद्रात्मभ्रातृकृतविद्रोह मर्कजनुषोऽद्रौ स्थितिञ्च निगदं**
**स्तद्राघवीय मसुरा द्रावणा दित मभद्रं विवेद सकलम् ॥**

खण्डा ॥ अनिलजः, दनुजविद्रावणौ, तद्राघवौ, कुशलं, द्राक्, सुपृच्छ्य, भद्रौ, सरौद्रौ, गभीरमुखमुद्रौ, च, इह, युवां, कौ, इति, वदन्, अर्कजनुषः, क्षुद्रात्मभ्रातृकृतविद्रोहं, अद्रौ, स्थितिञ्च, निगदन्, तद्राघवीयं, असुरात, रावणात, इतं, सकलं, अभद्रं विवेद ॥

व्याख्या ॥ तदिति ॥ अनिला ज्जात इत्यनिलजः=हनुमान्, दनुजा न्विद्रावयत इति दनुजविद्रावणौ=राक्षसविनाशकौ, तद्राघवौ = तदिति यौ सुग्रीवेण ऋश्यमूका द्दृष्टाविति पूर्वपरामर्शः - राघवौ=रामलक्ष्मणौ, द्वितीया- कुशलं=क्षेमं, द्राक्=अनुपदमेव, सुपृच्छ्य=सुष्ठु पृष्ट्वा, भद्रौ=मंगळमूर्ती - रौद्रेण सह वर्तेत इति सहपूर्वपदबहुव्रीहिः-गभीरा मुखमुद्रा ययो स्ता वित्यर्थः- च, इह=अत्र, युवां, कौ, इति-वदन्=आलपन्, अर्का ज्जनु र्यस्य सः, अर्क- जनुः, तस्य सुग्रीवस्य, क्षुद्र श्चासा वात्मभ्राता चेति क्षुद्रात्मभ्राता = वाली, तत्कृतविद्रोहं=अपकारं, अद्रौ स्थितिञ्च = ऋश्यमूकाद्रिनिवासञ्च, नितरां गदन् निगदन्=वदन्, तद्राघवीयं=तच्छ्रीरामसंबंधि, असुरात्, रावणात्, इतं=प्राप्तं - सकलं=समस्तं, अभद्रं, विवेद=जज्ञे ॥

विशे ॥ अत्र - ओंकाररूपस्य प्रणवाक्षरस्य गायत्रीमन्त्राद्यक्षरत्वे नांगी- कारा त्सर्वागमेषु प्रमाणतया च स्वीकृतत्वात् - पूर्वकाण्डेषु विरचितप्रकारानु- सारा च्चोंकाराद्यक्षर श्श्लोक उपारब्धः - अपि चात्र पुरैव भीतस्य सुग्रीवस्य श्रीरामलक्ष्मणदर्शनेन पुन रतिभीतश्च बभूवेति ध्वनिः - वालिभया दृश्यमूके निलीनस्य सुग्रीवस्य धनुर्धारिणौ रामलक्ष्मणौ दृष्ट्वा एते किमु वालिप्रेषितौ वीरभटाविति संशयो भीतिश्च बभूवतु रित्याशयः ॥

अथ ॥ हनुमत्कृतरामसुग्रीवसख्य मुपकल्प्यते ॥

स त्वादरं सकल मित्वाऽतिवेग मथ गत्वाऽन्तिकं कपिपते
र्नत्वाऽऽनुपूर्विक महित्वा मुदा सुमहिमत्वं निवेद्य च तयोः ।
नीत्वा तु तौ अनुमतत्वा द्विभुं सुमतिमत्त्वा त्सख्य मतनो
त्तत्त्वं हि सज्जनमहत्त्वं दयाढ्य मतिसत्त्वं प्रजासु सततम् ॥

---

खण्डा ॥ सः, तु, सकलं, आदरं, इत्वा, अथ, अतिवेगं, कपिपतेः, अन्तिकं, गत्वा, नत्वा, तयोः, सुमहिमत्वं, आनुपूर्विकं, अहित्वा, मुदा, निवेद्य, च, सः, अनुमतत्वात्, तौ, विभुं, नीत्वा, सुमतिमत्त्वात्, सख्यं, अतनोत्, सज्जनमहत्त्वं, प्रजासु, सततं, दयाढ्यम्, अतिसत्त्वं, हि, तत्त्वम् ॥

व्याख्या ॥ स इति ॥ सः=हनुमांस्तु, सकलं=समस्तं, आदरं, इत्वा =प्राप्य, अथ=ततः, अत्यन्तवेगं = अतिवेगं, कपिपतेः = कपिराजस्य सुग्रीवस्य, अन्तिकं=सन्निधिं, गत्वा=यात्वा; नत्वा च=प्रणम्य च, तयोः =रामलक्ष्मणयोः, सुमहिमत्वं=शोभनं महिमानं, आनुपूर्विकं = अनुक्रमं, अहित्वा=लवम प्यनपहाय, मुदा=सन्तोषेण, निवेद्य=विज्ञाप्य च, सः= हनुमान्, अनुमतत्वात्; सुग्रीवेणेति शेषः, तौ=रामलक्ष्मणौ, विभुं=कपीशं सुग्रीवं,नीत्वा=प्रापयित्वा,सुमतिमत्वात्=बुद्धिमत्त्वात्-हनुमत इत्यर्थोपलब्धिः सख्यं=स्नेहं, अतनोत्=कारयामास। तथाहि - सज्जनमहत्त्वं = सत्पुरुष-महिमा, प्रजासु=जनेषु, सततं=सर्वदा - दयाढ्यं=करुणायुक्तं - अतिसत्त्वं =अतिसत्वगुणयुतञ्च - तत्त्वं=इदमेव वास्तवं स्वरूपमिति भावः ॥

---

भावः ॥ सीतान्वेषणं कुर्वन्तौ तौ राघवा वनिलज श्शीघ्रं समेत्य कौ युवा मिति वदन् सुग्रीवस्य नीचात्मसोदरभूतवालिनो विद्रोहं, तस्याद्रिनिवास ञ्चोक्त्वा श्रीराम लक्ष्मणचरित माद्यन्तं संजज्ञे ॥

विशे ॥ अत्र रामसुग्रीवयोः कार्यसंपादनाय हनुमा न्दौत्य मवलंब्य श्रीरामेण सख्यञ्च सुग्रीवस्य कारयामासे त्यतः उत्तरोत्तरकार्यसाधनेऽप्ययमेव समर्थ इति द्योतते ॥

अथ ॥ श्रीरामसुग्रीवप्रथमसंभाषण मुपपाद्यते ॥

**विष्णुस्वरूप मतिभूष्णुप्रताप मरिजिष्णुं निशाम्य स तयो**
**रुष्णांशुज स्स्वधृतितृष्णाकरं युधि सुनिष्णात मग्र्य मवदत् ।**
**पुष्णामि जीवित मिहोष्णांशुज! प्रबलतृष्णां विधाय विजये**
**विष्णो! मदग्रजहरोष्णो भवात्युपचरिष्णु स्तवा ऽप्यरिविधे ॥**

खण्डा ॥ सः, उष्णांशुजः, तयोः, अग्र्यं, विष्णुस्वरूपं - अतिभूष्णु-प्रतापं - अरिजिष्णुं - स्वधृतितृष्णाकरं - युधि, सुनिष्णातं, निशाम्य, अवदत् - हे ! उष्णांशुज! विजये - प्रबलतृष्णां - विधाय - इह - जीवितम्-पुष्णामि - विष्णो! मदग्रजहरोष्णः - भव, तव, अरिवधे, अत्युपचरिष्णुः - अस्मि ॥

व्याख्या ॥ विष्णुस्वरूप मिति ॥ सः, उष्णांशुजः=सूर्यतनय स्सुग्रीवः- तयोः=रामलक्ष्मणयोः - अग्र्यं=ज्येष्ठं-विष्णुस्वरूपं = वैकुण्ठधाम्न स्स्वरूपं - अतिभूष्णुप्रतापं=अत्यधिकप्रतापवन्तम् - अरिजिष्णुम्=वैरिजयिनम् -स्वस्य, धृतौ=धैर्ये विषये, तृष्णाकरम्=आशाजनकम् - युधि=समरे, सुनिष्णातम् =अत्यन्तनिपुणम् , निशम्य=दृष्ट्वा, अवदत् = जगाद - हे ! उष्णांशुज! उष्णांशोर्वंशे=सूर्यान्वये, जात इति तथोक्तः-तस्य सम्बुद्धिः - श्रीरामचन्द्र-सम्बोधनम् - विजये विषये, प्रबलतृष्णाम्=अधिकाशाम् - विधाय=कृत्वा, इह=अस्मि न्नद्रौ, जीवितम्=प्राणम् , पुष्णामि=धारयामीत्यर्थः - हे ! विष्णो ! मम, अग्रजस्य=ज्येष्ठसोदरस्य वालिनः, हरे=हरणे, उष्णः=दक्षः

भावः ॥ अथ स हनुमा नतिद्रुतं सुग्रीवसमीपं गत्वा राघवचरित माद्यन्तं लवम प्यपरित्य ज्योक्त्वा च विभो रनुमतिपूर्वकं रामलक्ष्मणौ तत्स-मीपं नीत्वा तयो स्सख्य मकारयत् - सत्पुरुषशीलं सर्वोपकारक मतिदयाढ्य मिति च प्रसिद्धमेव खलु ॥

विशे ॥ पूर्वत्रिपादोक्तार्थविशेष स्तूत्तरार्धगततुरीयपादस्थसामान्येन समर्थितः - अत स्त्वत्रार्थान्तरन्यासालंकारः - श्लो ॥ उक्ति रर्थान्तरन्यास स्स्या त्सामान्यविशेषयो रिति लक्षणात् ॥

अव ॥ सुग्रीवेण वालिकृतापकारनिवेदनम् श्रीरामकृताभयदानञ्चोपवर्ण्यते ॥

**तुष्ट स्स दाशरथि रिष्ट ङ्कपे रतिपटिष्ठ मा मिन्द्रतनय**
**न्दुष्टं निशम्य हृदि कष्ट म्प्रपद्य तदभीष्टं चिकीर्षु रवदत् ।**
**नष्टं रिपु न्तव बलिष्ठं कपीश! मनुः दुष्टस्य वानरपते**
**र्दिष्टान्त मद्य शरचेष्टा मम प्रथनपुष्टिश्च पश्यतु भवान् ॥**

खण्डा ॥ तुष्टः, सः, दाशरथिः, कपेः, इष्टम्-अतिपटिष्ठम्, इन्द्र - तनयम्, दुष्टम्, निशम्य, हृदि, कष्टम्, प्रपद्य, तदभीष्टम्, चिकीर्षुः, अवदत् - हे! कपीश! बलिष्ठम्, तव, रिपुम्, नष्टम्, मनु, भवान्, अद्य, दुष्टस्य, वानरपतेः, दिष्टान्तम्, मम, शरचेष्टाम्, प्रथनपुष्टिश्च, पश्यतु ॥

व्याख्या ॥ तुष्ट इति ॥ तुष्टः = सुग्रीवसख्येन संतुष्टान्तरंगः, सः, दाशरथिः=दशरथसुत श्श्रीरामः - कपेः=सुग्रीवस्य, इष्टम् = अभीप्सितम्, अतिपटिष्ठम्=अतिबलाढ्यम्, इन्द्रतनयम्=वालिनम्, दुष्टम्=दुश्शीलञ्च, निशम्य=श्रुत्वा, हृदि=मनसि, कष्टम्, प्रपद्य = लब्ध्वा, तस्य सुग्रीवस्य,

- भव-तव, अरिवधे=शत्रुवधे, रावणसंहारे, अत्युपचरिष्णुः=अधिकोपकारी, अस्मि=भवामि-स्यामिति भाविन्यर्थे वर्तमानप्रयोगः ॥

भावः ॥ सुग्रीव श्श्रीरामलक्ष्मणपराक्रमादिगुणान्, विष्णुस्वरूपमहिमादिकञ्च, समग्रं निशाम्य, तयो र्ज्येष्ठं प्रत्येव मवोचत् - अयि! राम! "मदीय जीवित मत्रर्श्यमूकाद्रौ 'मदीयसोदरहन्तकं यथाकथञ्चि द्धन्या'मिति प्रबलाशापूरितोऽहं नयामि - तव शत्रुम् विनाशयिष्या म्येन' ममापकारिण मग्रजं जही त्यभ्यर्थयामास ॥

विशे ॥ अत्र श्रीरामो रावणजेतारं वालिनं विहाय सुग्रीवेण सख्य मगम दित्यने नोभयो र्दृढसम्बन्धो विद्यत इति ज्ञायते - तत्सम्बन्धद्योतनार्थैव सुग्रीवस्य - श्रीरामचन्द्रस्य च - उष्णांशुज इति विशेषणपदस्योपयुक्तिः - अनेन श्रीराम स्सूर्यकुलोत्पन्नः - सुग्रीव स्सूर्यतनयः-अत उभयो स्सम्बन्धस्य विद्यमानत्वा त्सुग्रीवेण सख्य मकरो द्राम इति ज्ञाप्यते ॥

अव ॥ श्रीरामबलप्रदर्शनादिक मुपपाद्यते ॥

**राम स्ततोऽद्रितटभूमौ तु वालिकृतनामावशिष्ट मसुरं**
**भीमश्च दुन्दुभि मसामान्यकाय मतिधीमा निशम्य च कपेः ।**
**कामं स्फुरन्महदसीमौजसेक्षणसकामं कपिश्च निकषा**
**नामेषुणाऽभिद दसामान्यसालतति मामेदिनीस्थल महो !**

खण्डा ॥ ततः, अतिधीमान्, रामः, अद्रितटभूमौ, वालिकृतनामावशिष्टम्, भीमम्, असामान्यकायम्, दुन्दुभिम्, असुरञ्च, कपेस्तु, निशम्य कामम्, स्फुरन्महदसीमौजसेक्षणसकामम्, कपिम्, निकषा, नामेषुणा, असामान्यसालततिम्, आमेदिनीस्थलंच, अभिदत्, अहो ॥

व्याख्या ॥ राम इति ॥ ततः=श्रीराम सुग्रीवसम्भाषणानन्तरम्, अतिधीमान्=बुद्धिमान्, रामः=श्रीरामः, अद्रितटभूमौ = ऋश्यमूकगिरिसानौ,

---

अभीष्टम्=अभिमतम्, कर्तुं मिच्छुः श्चिकीर्षुस्सन्, अवदत्=जगाद - हे! कपीश! सुग्रीव! बलिष्ठम्=बलाढ्यम्, तव, रिपुम्=शत्रुम्, नष्टम्=नाशंगतमेव, मनु=अवबुध्यस्व, भवान्, अद्य = इदानीम्, दुष्टस्य; वानरपतेः=वालिनः, दिष्टान्तम् = पंचत्वम् - नि ॥ स्या त्पंचता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः - अन्तो नाशो द्वयो र्मृत्यु र्मरणं निधनोऽस्त्रिया-मित्यमरः-मम, शरचेष्टाम्=बाणप्रयोगक्रियांच, प्रधने=युद्धे, पुष्टिम्= सारंच, पश्यतु= अवलोकयतु - शेषे प्रथम इति प्रथमः ॥

भावः ॥ श्रीरामचन्द्रोऽपि सुग्रीवोक्तवालिचरितम्, तत्स्थैर्यधैर्यादिक मात्माभीष्टंच साकल्यत श्श्रुत्वा तत्सुग्रीवोपकारकार्यं चिकीर्षुमना अभवत् । तदनु राम स्सुग्रीवंप्रति - अयि! कपीश! इतः परं तव शत्रुः नष्टप्राय एव - माकुरु शङ्काम् - साम्प्रतमेव वालिनो ममच संगरकौशलम्, बाणप्रयोगविधानं - तद्वालिनिधनंच द्रक्ष्यसि इति विस्पष्ट माबभाण ॥

विशे ॥ अत्र दिष्टान्त मद्य वानरपते रात्मन श्शरचेष्टांच भवा न्पश्य त्वित्यनेन श्रीरामबाण स्यामोघत्वम्, तद्वाचोऽवैयर्थ्यंच ध्वन्यते ॥

अव ॥ श्रीरामेण वाली घातयिष्यत इति सुग्रीवविश्वासः प्रकटीक्रियते ॥

**वातात्मजादिकपिजाते मुदे स रघुपोत स्तनुं सुररिपो**
**र्धृता न्ततान पदघाता त्सुदूर मपनीताऽभव त्सपदि सा ।**
**सीतापते र्बल मभूतं समीक्ष्य निजकातर्यभाव मजह**
**त्सूतो रवे र्ममतु ताताऽय मित्युदितचेतोनिकाम मगमत् ॥**

---

वालिना, कृतम्, नामावशेषम् यस्य सः - वालिकृतनामावशिष्टम्, भीमम् =भयङ्करम्, असामान्यकायम्=महोन्नतदेहम्, दुन्दुभिम्; असुरंच= राक्षसंच, कपेस्तु=सुग्रीवात्, निशम्य=श्रुत्वा, सुग्रीवेण सर्वविज्ञायेति भावः- कामम्=निकामम्, स्फुरच्च, महच्च, असीमचेति द्वन्द्वः - तच्चेत्यो- जश्चेति कर्मधारयः-तस्य, ओजसः, ईक्षणे=दर्शने, सकामम्=साभिलाषम्, कपिम् निकषा=सुग्रीवान्तिके (वा) अभितः=परित, स्समया निकषा हा- प्रतियोगेऽपि - इति द्वितीया - नामेषुणा=श्रीरामनामांकितबाणेन, असामा- न्यसालततिम्=महोन्नतसप्ततालततिं, आमेदिनीस्थलञ्च=पातालपर्यन्तञ्च - अभिदत्=भेदन मकरोत् - अहो! इत्यद्भुतसूचकानुकरणध्वनिः - अभिविधा वाङाऽव्ययीभावः ॥

भावः ॥ तत श्श्रीराम स्सुग्रीवेण तदद्रौ मृतकळेवरं दुन्दुभे रस्तीति विज्ञाय-आत्मबलमपि सुग्रीवस्य दिदर्शयिषु रात्मबाणेन तत्दुन्दुभिकायम् - सप्तसालवृक्षततिं ञ्चैकेन बाणेनै वाच्छिनत् ॥

विशे ॥ पुरा किल दुन्दुभिनामा राक्षस स्सर्वा न्निर्जित्य सर्वजेतारं वालिनम्प्रति योद्धु माजगाम - आगतेन दैत्येनसह वाली मल्लयुद्धाय सन्नद्धो बभूव। तदनु तयोर्द्वयोरन्योन्यं निष्पीड्यमानयो र्गुहाप्रवेशोऽभवत्, वालिन मनुसृत्य गत स्सुग्रीवो बिलमुखे निरीक्षमाण आस्थितः - तदनन्तरं गते काले बिला द्रक्तं निर्ययौ - तन्निरीक्ष्य सुग्रीवः भ्राता हत इति मत्वा पुरी माज- गाम - वालीतु तं निहत्य तत्कळेबरं कन्दुकमिव पदांगुष्ठेन चिक्षेप - तत्तु कस्यचन महर्षे रंके पपात - तद्रुषातु स मुनि श्चुकोप - तद्दत्तशापेन वाली ऋष्यमूकाद्रिं प्रवेष्टु मनर्हो भभूवेति कथाऽत्रानुसन्धेया ॥

खण्डा ॥ सः, रघुपोतः - वातात्मजादिकपिजातेः - मुदे, सुररिपोः, तनुम्, पदघातात्, धृताम्, ततान, सपदि, सा, सुदूरम्, अपनीता, अभवत्-रवेः, सूतः, सीतापतेः, अभूतम्, बलम्, समीक्ष्य, निजकातर्यभावम्, अजहत्, अग्रम्, मम, तु, त्राता, इति, उदितचेतोविकासम् - अगमत् ॥

व्याख्या ॥ वातात्मज इति ॥ सः, रघोः, पोतः = अर्भक श्श्रीरामः, नि ॥ पोतः पाकोऽर्भको डिंभ-इत्यमरः-वातात्मजादिकपिजातेः = हनुमदादि वानरसमूहस्य, नि ॥ जाति र्जातिंच सामान्य - मिति चामरः - मुदे = मोदाय, सुररिपोः = दुंदुभिनामासुरस्य, तनुम् = शरीरम् - पदघातात् = चरणताडनात् - धृताम् = विक्षिप्तां, ततान = अकरोत् - सपदि = सद्यः - सा = तनुः, सुदूरम् = अतिदूरम्, अपनीता, अभवत् - रवेः सूतः = पुत्रः रविसूतः - नि ॥ सूतस्तुसारथौ तक्षिणक्षत्रियाद्ब्राह्मणीसुते, वन्दिपारदयोः पुंसिप्रसूते प्रेरितेत्रिषु-इति विश्वः, सुग्रीव इति यावत् - सीतापतेः = श्रीरामचन्द्रस्य, अभूतम् = भूतपूर्वं न भवतीत्यर्थे प्रयुक्तम् - बलम् = सामर्थ्यम्-समीक्ष्य = दृष्ट्वा, निजकातर्यभावम् = स्वात्माध्यस्तभयस्वभावम्-अजहत् = तत्याज - अग्रम् = श्रीरामः, मम, तु, त्राता = रक्षकः - इति = इत्थम् - उदित चेतोविकासं = उदित मानसोल्लासं, अगमत् = प्राप ॥

भावः ॥ अथ श्रीरामचन्द्रः तत्सुग्रीवदर्शित न्दुन्दुभिकायं निरीक्ष्य तत्कपिलोकप्रत्यायनार्थं पदाङ्गुष्ठेन चिक्षेप - तेन तत्काय मतिदूर मपासरत् - त द्दृष्ट्वा सुग्रीवो वाल्यागतभीतिं त्यक्त्वा मन स्यानन्द मनुबभूव-रामोऽयं वालिमारणे शक्त इति व्यश्वस दित्यर्थः ॥

विशे ॥ अत्र श्रीरामकृतस्वबलप्रदर्शनेन यथा सुग्रीवमनसः प्रमोद मभूत्तथा श्रीरामकार्यम प्यवश्यं सफलं भविष्यती त्यर्थो व्यज्यते - अपिच वातात्मजादिविश्वासार्थ मित्यनेन श्रीरामबलप्रदर्शनलब्धानन्दः न केवलं सुग्रीवस्यैव-अपिच सर्वेषामपि कपीनां राम स्सुग्रीवं गतापदं करिष्यती त्यानन्दः ताहगतिलोकबलशालिनि श्रीरामे तेषां सेव्यत्वबुद्धिसंजननंच बभूवेतिच ध्वन्यते ॥

अव ॥ वालिना योद्धुं सुग्रीवं प्रेरयति श्रीराम इत्युपनिबद्ध्यते ॥

**रे! ग्राह्य मस्य बल मग्रेसरोऽय मिति सुग्रीववानरपति**
**श्चाग्रेऽस्तुव द्बलवदुग्रारि भङ्गसमुदग्रं रघूद्भववरम्।**
**निग्राहकोऽस्मि समरेऽग्रेजने स्तव युधग्रक्षितिं भज हरे!**
**सुग्राह्य एव प्लवगाग्रेसर स्त्विति स सुग्रीव माजि मनयत् ॥**

---

खण्डा ॥ रे! अस्य, बलं, ग्राह्यं, अयं, अग्रेसरः, इति, सुग्रीववानरपतिः, बलवदुग्रारिभंगसमुदग्रं, रघूद्भववरं, अग्रे, अस्तुवत्, हरे! समरे, तव, अग्रेजनेः, निग्राहकः, अस्मि, युधग्रक्षितिं, भज, प्लवगाग्रेसरः, सुग्राह्यः, एव, इति, सः, सुग्रीवं, आजिं, अनयत् ॥

व्याख्या ॥ रे इति ॥ रे! इति आत्मसंबोधनपदं - अस्य - श्रीरामस्य, बलं=सामर्थ्यं, ग्राह्यं=ग्रहीतुं योग्यं, अयं, रामः, अग्रेसरः=योधाग्रेसरः, इति =एवं, वानराणां पतिः=वानरपतिः- सुग्रीव इति वानरपति रिति तथोक्तः- बलवन्तश्च ते उग्रारयश्चेति बलवदुग्रारयः - तेषां भंगे =मारणे अवमतौ वा, समुदग्रः=महान् , तं, रघूद्भववरं=श्रीरामं, अग्रे=पुरतः, अस्तुवत्=स्तोत्र ञ्चकार, हे! हरे! सुग्रीव! नि ॥ यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु शुकाहिकपिभेकेषु हरि र्नाकपिले त्रिषु -इत्यमरः - समरे=युद्धे, तव, अग्रेजनेः=सोदरस्य वालिनः, निग्राहकः=निग्रहकर्ता, अस्मि=भवामि-युधग्रक्षितिं=समरतलं, भज=गच्छ, प्लवगाग्रेसरः=कपि प्वग्रेसरो वाली, सुग्राह्य एव=सुलभं ग्रहीतुं शक्य एव -इति=इत्थं, उक्त्वा, सः=श्रीरामः, सुग्रीवं, आजिं=समरभूमिं - अनयत्=अयं द्विकर्मकधातुः ॥

भावः ॥ तत श्श्रीरामकृतबलप्रदर्शनानुपदं, सुग्रीव स्तन्महिमानं संश्लाघ्य वालिवधा यायं समर्थ इति विश्वास मचीकरत् - तदनु श्रीरामोऽपि - सुग्रीव! अह मस्मि वालिवधे सहायो भवतः - मा भैषीः-इत्यभय न्दत्वा वालिनासह योद्धु मनय त्तं समरतलम् ॥

विशे ॥ अत्र - बलवदुग्रारिभंगसमुदग्र - मिति श्रीरामविशेषणेन-भाविकाले दशानन मप्ययं जेष्यतीति भावि काव्यार्थ स्संसूच्यते ॥

अव ॥ वालिसुग्रीवयो स्समरगमन मुपवर्ण्यते ।

**निर्णीतरीति मनु तूर्णं क्रुधा रिपुविदीर्णाय सूर्यतनयः**
**पूर्णो बलेन रिपुकर्णप्रभेदिरवपूर्णाच्छकम्बुवदनः ।**
**घूर्णन्गिरे स्समवतीर्णोऽभव त्सुपरिपूर्णो रुषाऽनुज महो !**
**चूर्णं विधातु मपि निर्णिद्रहृ त्समवतीर्णो मृधे हरिसुतः ॥**

---

खण्डा ॥ सूर्यतनयः, निर्णीतरीतिमनु, तूर्णं, क्रुधा, रिपुविदीर्णाय, बलेन, पूर्णः, रिपुकर्णप्रभेदिरवपूर्णाच्छकंबुवदनः, घूर्णन्, गिरेः, समवतीर्णः, अभवत्, हरिसुतः, अपि, रुषा, सुपरिपूर्णः, अनुजं, चूर्णं, विधातुं, निर्णिद्रहृत्, मृधे, समवतीर्णः - बभूव ॥

व्याख्या ॥ निर्णीतरीति मिति ॥ सूर्यतनयः =सुग्रीवः- निर्णीतरीतिमनु =निर्णीतप्रकार मनुसृत्य, तूर्णं=शीघ्रं - नि ॥ सत्वरं चपलं तूर्णं मविलंबित माशु च - इत्यमरः - क्रुधा=रुषा, रिपुविदीर्णाय=शत्रुभेदनाय, बलेन पूर्णः =संपूर्णः - रिपुकर्णान् प्रकर्षेण भिनत्तीति=रिपुकर्णप्रभेदी-स चासौ रवश्चेति तथोक्तः - तेन पूर्णनिर्मलकंबुयुक्तं वदनं यस्य सः=रिपुकर्णप्रभेदि रवपूर्णाच्छकंबुवदनः - घूर्णन्=भ्रमणं कुर्वन्, घूर्ण भ्रमणे - इति धातो श्शत्रन्तरूपं- गिरेः=ऋश्यमूकात्, समवतीर्णः, अभवत् - अवरोहण श्चकार, हरिसुतः= शक्रसुत स्स वाल्यपि - रुषा=कोपेन, सुपरिपूर्णः=परिपूर्णः - अनुजं=सोदरं, सुग्रीवं, चूर्णं विधातुं=पिण्डीकर्तुं, निर्णिद्रं हृत् यस्य सः = निर्णिद्रहृत् = जागृतमनाः, मृधे=युद्धे, समवतीर्णः - बभूव ॥

भावः ॥ यदा सुग्रीवः श्श्रीरामप्रोत्साहितान्तरङ्गो रिपुकर्णप्रभेदकशंखारव म्मुहुर्मुहुः कुर्व न्समरतल माविवेश तदाऽसौ वाली च द्विगुणितकोपेनाजिरङ्ग मविशत् ॥

विशे ॥ अत्र सुग्रीवाजिगमने पटाटोपवर्णनेन -'निस्सारस्य पदार्थस्य प्राये णाडंबरो महान्' इत्युक्तरीत्या तस्य विजयेतरः - निर्णिद्रहृ दिति वालिविशेषणेन विजयासाफल्यं तस्येति - पक्षप्रतिपक्षयो स्संसूच्यते ॥

अव ॥ श्रीरामेण सुग्रीवानभिज्ञानकथनम् ॥

**य ङ्कातरं समरसङ्कल्पधीयुत मसङ्कोच मर्यमसुत**
**न्त्वङ्काय प्रैषय दशङ्क श्रियःपति रघाङ्क सुरेन्द्रतनयम् ।**
**त ङ्कीश मेक्ष्य तु निरङ्क म्मृधे हित महङ्कारवद्धरिपतेः**
**कि ङ्कार्य मित्यधिकशङ्कान्वितोऽभव दल ङ्कोसलाधिपसुतः ॥**

---

खण्डा ॥ श्रियः पतिः, कातरं, समरसंकल्पधीयुतं, असंकोचं, यं, अर्यमसुतं, अशंकं यथा तथा, अघाङ्कं, सुरेन्द्रतनयं, प्रति, अंकाय, प्रैषयत् - तं, हितं, कीशं - अहङ्कारवद्धरिपतेः - निरंकं - एक्ष्य, किं, कार्यं - इति, कोसलाधिपसुतः - अलं - अधिकशंकान्वितः - अभवत् ॥

व्याख्या ॥ यमिति ॥ श्रियः पतिः=श्रीरामचन्द्रः - कातरं=भीतं, समरसङ्कल्पधीयुतं=युद्धाय कृतनिश्चयधियोपेतं-असंकोचं=संकोचहीनं, यं - अर्यमसुतं=सूर्यपुत्रं - सुग्रीवं - अशंकं यथा तथा=भीरहितं यथा तथा, अघं =सोदरपत्नीगमनरूपं - अंकः=चिंह्न - यस्य त मित्यर्थः - सुरेन्द्रतनयं=इन्द्रसुतं वालिनंप्रति, अंकाय=युद्धाय, प्रैषयत्=प्राहिणोत् - अथ, युद्धे, तं, हितं =सखायं, कीशं=कपिं, सुग्रीवं, अहंकार मस्यास्ती त्यहंकारवत्, स चासौ हरिपतिश्चेति-तस्मात्-अहंकारवद्धरिपतेः=अहङ्कारयुक्तवालिनः, निरंकं= निर्विशेष मकेनेत्यर्थे 'कुगतिप्रादय' इत्यत्र अवादयक्रुष्टोद्यर्थे तृतीयेति वचना त्समासः - आ+ईक्षित्वा=एक्ष्य=दृष्ट्वा, किं, कार्यं=कर्तव्यं - इति=इत्येवं, कोसलाधिपसुतः=श्रीरामः - अलं=तूष्णीं- नि ॥ अलं भूषण पर्याप्ति वारणेषु निरर्थके, अलं शक्तौ च निर्दिष्ट-मिति विश्वः-अधिकशंकान्वितः=अत्यन्तसंदेहसमन्वितः - अभवत्=बभूव ॥

भावः॥ दाशरथि र्यं सुग्रीवं वालिना योद्धुं प्राहिणो त्तं सुग्रीव मनभिज्ञानांकं वालितुल्यगात्र मजान न्किङ्कर्तव्यतामूढो बभूव ॥

अव ॥ सुग्रीवस्य युद्धा दपसरण मुपपाद्यते ॥

**भक्तिप्रपूर्णनृपसूक्तिं निकाम मनृतोक्तिं विविच्य मनसा**
**शक्ते र्यथार्ह मनुषक्तो रिपो रसुविमुक्तौ प्रदर्शितबलः ।**
**स्वाक्तावमानसुविरक्तो मृधा द्रुधिरसिक्त स्स सूर्यतनयो**
**द्रा क्तोषितारिजनतोक्ती स्स्मर न्स्वजनरक्तो ययौ गिरिगृहम् ॥**

---

खण्डा ॥ सः, सूर्यतनयः, भक्तिप्रपूर्णनृपसूक्तिं, मनसा, निकामं, अनृतोक्तिं, विविच्य, शक्तेः, यथार्हं, अनुषक्तः, रिपोः, असुविमुक्तौ, प्रदर्शित बलः, स्वाक्तावमानसुविरक्तः, रुधिरसिक्तः, स्वजनरक्तः, द्राक्, तोषितारि-जनतोक्तीः, स्मरन्, मृधात्, गिरिगृहं, ययौ ॥

व्याख्या ॥ भक्ति रिति ॥ सः, सूर्यतनयः=सुग्रीवः, भक्त्या=स्नेहेन, प्रपूर्णा च सा नृपसूक्तिश्चेति तां - मनसा=हृदा - निकामं=अत्यन्तं, अनृ-तोक्तिं=मिथ्यावाचं, विविच्य=विवेचनं कृत्वा-शक्तेः=सामर्थ्यस्य, यथार्हं; अनुषक्तः=संगतः, रिपोः=वैरिणः, असुविमुक्तौ=प्राणप्रणाशने, प्रदर्शितं, बलं येन सः तथोक्तः - स्वाक्तावमानेन=आत्मनाप्तपराभवेन, सुविरक्तः= विराग मापन्नः, रुधिरेण=स्वगात्रनिष्ठ्यूतशोणितेन, सिक्तः = आर्द्रीकृतः - स्वजनरक्तः = स्वीयजनानुरक्तः, द्राक् - द्रुतं - नि ॥ द्राङ्मङ्क्षुसपदिद्रुते - इत्यमरः - तोषिताः=स्वस्य जयेन तुष्टाः - ते च ते अरिजनाश्च=तोषितारि जनाः - तेषां समूहः=जनता - तस्याः उक्तीः=वाचः, स्मरन् = मनसि विचिन्तयन्, मृधात् = युद्धात् - गिरिगृहं = ऋश्यमूकाद्रिस्थनिलयं - प्रति ययौ=जगाम ॥

भावः ॥ अथ सुग्रीव श्श्रीरामकृतप्ररोचनयाऽऽयोघनाय गत्वा तत्रा-सहायो मनसि तदुक्ती र्विचिन्त्य यथाशक्ति तेन सह समरे युद्धं चकार । तथा वालिकृतताडनादिक मसहमान स्स्वनिलय ञ्जिगमिषुःशत्रुकृतहेळनादिकम प्यनुस्मर न्नृश्यमूकाद्रि मभिदुद्राव ॥

विशे ॥ अरिजनावहेळनादे रात्मप्राणावन मावश्यकमिति मन्वानस्य सुग्रीवस्य बुद्धिविशेषोऽभिव्यज्यतेऽत्र ॥

अव ॥ श्रीरामंप्रति युद्धनिवृत्तस्य सुग्रीव स्याभ्यर्थना ॥

**गोपाय मेऽद्य रघुभूपामयोक्त मधिकोपायवि न्मम मन**
**स्तापापह न्त्ववद आपातरम्य मरितापाय बद्धशपथः ।**
**कोपाढ्यकीशवरचापोत्थबाणतितितापान्विता मम तनुः**
**पापी भवे र्यदि महाऽपाय मैष्य मरिकोपैकमुष्टिनिहतैः ॥**

---

खण्डा ॥ अधिकोपायवित्, हे! रघुभूप! अद्य, मम, गोपाय, अरितापाय, च, बद्धशपथस्सन्, मनस्तापापहं, आपातरम्यं, अभयोक्तं, तु, अवदः, मम, तनुः, कोपाढ्यकीशवरचापोत्थबाणतितितापान्विता, अभूत्, अहं, अरिकोपैकमुष्टिनिहतैः, महाऽपायं, ऐष्यं, यदि, पापी, भवेः, त्व मिति शेषः ॥

व्याख्या ॥ गोपायेति ॥ अधिकाश्च ते उपायाश्च अधिकोपायाः-तान्वेत्तीति तथोक्तः - तस्य संबुद्धौ - अधिकोपायवित् - यद्वा - अधिकं उपायवित् - हे! रघुभूप! श्रीराम! अद्य = इदानीं, मम - गोपाय = रक्षणाय, अरीणां - तापाय च - यद्वा - अरे श्शत्रो र्वालिनः, तापाय, च, बद्धः शपथः येन सः तथोक्तस्सन्, मनसः ताप मपहन्तीति तं मनस्तापापहं, आपातरम्यं = श्रवणपातेन सुखप्रदं, अभयोक्तं = अभयवचनन्तु, अवदः = उक्तवानसि - वद व्यक्तायां वाचीति धातो र्लङि मध्यमैकवचनरूपं - मम, तनुः = देहः - कोपेन आढ्यः = युक्तः, स चासौ कीशश्चेति तथोक्तः-तस्य वालिनः वरचापा दुदिता = उद्गता या बाणततिः, तस्य तापे नान्विता = प्रतप्ता, अभूत् = बभूव-अहं, अरेः = वालिनः, कोपपूर्विकाया एकस्या एव मुष्टिनिहतैः - महाऽपायं = अधिकापायं, ऐष्यं यदि = अप्राप्स्यं यदि, पापी = पापयुक्तः, भवेः = अभविष्यः - त्व मिति शेषः ॥

भावः ॥ हे! श्रीराम! त्वं "युद्धे ते - साहाय्यं करिष्यामि - माभैषी" रित्युक्त्वा प्रतियोद्ध्रा संगतस्य मम तनु स्तवासहायेन हेतुना शत्रुकृतबाणमुष्टिघातैः पिण्डीकृता - यद्यह म्महापाय मगमिष्य न्तवाघ मापादित मभविष्यदिकल - "य स्तित्याज सखिविदं सखायं; न तस्य वाच्यपि भागोऽस्ति यदीं श्रृणो त्यलकं श्रृणोति, नहि प्रवेद सुकृतस्य पन्था" मिति श्रुतेः ॥

अव ॥ भेदज्ञानाय स्रज न्धारयेति सुग्रीवंप्रति रामोक्ति रुपपाद्यते ॥

**देवार्कपुत्र ! युधि ते वालिना समतनूवेषकारणवशा**
**न्मे वेदना प्यपगता वा मये ! मनसि ते वेदना ञ्जहि; सखे !**
**भावेऽन्यथा कुरु हि मा वालिना तुलितभाव ञ्जहीहि वपुषि**
**प्रावार माप्नुहि; सुमावीत मावह; गळे वालिभेदनकृते ॥**

खण्डा ॥ हे! देव! अर्कपुत्र! अये! युधि, ते, वालिना, समतनूवेषकारणवशात्, मे, वां, वेदनाऽपि, अपगता, हे! सखे! ते, मनसि, वेदनां, जहि - भावे, अन्यथा, माकुरु, हि, वपुषि, वालिना, तुलितभावं, जहीहि, प्रावारं, आप्नुहि, गळे, वालिभेदनकृते, सुमावीतं - आवह ॥

व्याख्या ॥ देवेति ॥ हे! देव! विभो! नि ॥ राजा भट्टारको देव-इत्यमरः अर्कपुत्र! =सूर्यतनय! सुग्रीव! अये! सखे! युधि=समरे, ते = तव, वालिना समानः तनूवेषः - स चासौ चेति कर्मधारयः-तत्कारणवशात् =तद्धेतो रित्यर्थः, मे=मम, वां=युवयोः, वेदनाऽपि=ज्ञातृताऽपि, अपगता=नष्टा - स्मृतिपथा दपगतेत्यर्थः - हे! सखे! ते, मनसि=हृदये, वेदनां = व्यथां, जहि = त्यज - भावे=त्वदभिप्राये, अन्यथा=इतरथा, माकुरुहि=मामंस्थाः - वपुषि = शरीरे, वालिना, तुलितभावं = सदृशभावं, जहीहि=विसर्जय, प्रावारं= उत्तरीयं, नि ॥ द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा। संव्यान मुत्तरीयञ्च- इति चामरः - प्रकर्षे णावृणोतीत्यर्थो त्कवचं वा, आप्नुहि=प्राप्नुहि-गळे= कण्ठे, वालिभेदनकृते = वालिनो भेदनाय, भेदज्ञानाय वा, सुमावीतं = पुष्पविरचितावीतं, आवह=वहस्व ॥

भावः ॥ हे! सुग्रीव ! त्व मद्य सङ्गरे वालिसमवपु र्भूत्वा स्थितोऽसि। अत स्त्वां वेत्तु मशक्तोऽहम्। तस्मा त्त्व म्मनसि व्यथा म्माकुरु-अन्यथाऽभि-

विशे ॥ श्रीरामकृतवाग्दानवैपरीत्यं विवक्षुणा सुग्रीवेण स्वदेहतापा दधिकतरं श्रीरामचन्द्र स्याग्रमाप्ते रुपवर्णितत्वात् - वक्ष्यमाणात्त स्सुग्रीवमरण- पर्यन्ताकक्षिक इति ध्वन्यते ॥

अव ॥ पुन र्युद्धाय सुग्रीवानङ्गीकार उपश्लोक्यते ॥

वन्देऽह मिन्द्रसुतभिन्दानवाच मरविन्दाक्ष ! मावद बला
द्भिन्दीकृतोऽस्मि रिपुणेन्दीवर ! प्रबलसन्दोहलेन समरे ।
सन्देह एव बलवृन्दान्वितस्य युधि सन्दानितस्य विजये
मन्दीकरोति प्रतिय न्देव ! सत्त्व मरिबृन्दस्य राम ! स यतः ॥

खण्डा ॥ हे! अरविन्दाक्ष! अहं, त्वां, वन्दे, इन्द्रसुतभिन्दानवाचं, मावद, हे! इन्दीवर समरे, प्रबलसन्दोहलेन, रिपुणा, भिन्दीकृतः, अस्मि, हे! देव! राम! यतः, सः, प्रतियन्, अरिबृन्दस्य, सत्त्वं, मन्दीकरोति, ततः, बलवृन्दान्वितस्य, युधि, सन्दानितस्य, तस्य, विजये, सन्देह एव ॥

व्याख्या ॥ वन्द इति ॥ हे! अरविन्दाक्ष! =कमलाक्ष! अहं, त्वां, वन्दे= नमस्करोमि; इन्द्रसुतस्य=वालिनः, भिन्दानवाचं=भेदनविषयकं वाक्यं, मावद =माचक्ष्व - हे! इन्द्याः वर! इन्दीवर = लक्ष्मीपते! समरे, प्रबलसन्दोहलेन= नितरा मुत्साहयुक्तेन, रिपुणा=शत्रुणा, भिन्दीकृतः अस्मि=शकलीकृतोऽस्मि- हे! देव! राम! यतः=यस्मा त्कारणात्, सः - वाली, प्रतियन्=प्रतियन्ता, सन्, अरिबृन्दस्य=शत्रुवर्गस्य - सत्त्वं=बलं - मन्दीकरोति=मन्दं, करोति ततः = तस्मा द्धेतोः, बलवृन्दान्वितस्य=बलाढ्यस्य- युधि; सन्दानितस्य=बद्धमनसः, तस्य=वालिनः, विजये; विषये - सन्देहएव=संशय एवेत्यर्थः ॥

भावः ॥ भो! रामचन्द्र! त मनन्तबलसम्पदं जेतुं न वयं पारयामः-प्रबलेन तेनाहं चूर्णीकृतगात्रोऽस्मि - यदि स तु बली युद्धेऽभिमुखः स्थितो यस्य

---

प्रायं माकुरु - इदानीं त्वं वालिसमभावं त्यक्त्वा भेदकज्ञापनायैक मुत्तरीयं, गळे सुममाला श्चावहस्वेति ॥

विशे ॥ अत्र सुग्रीवस्य- देव! इति सम्बोधनेन रामोऽवश्यं वालिसंहरणं कृत्वा सुग्रीवं राजानं करिष्यामी त्यसूसुच दिति ज्ञाप्यते - यद्वा द्वयो स्तयो रेकवंश्यत्वेपि सूर्या त्साक्षाज्जनिमा न्सुग्रीव स्सूर्यवंशे परम्परोत्पन्नस्य दाशरथे रर्वाचीनत्वा द्युक्तमे वाऽयं सम्बोधनार्थे इत्यल मतिप्रसक्त्या ॥

अव ॥ श्रीराम स्सुग्रीवं पुन र्युद्धाय प्रोत्साहयति ॥

**स्या** देव मद्य रिपुनोदेन ते हृदयमोदप्रदोऽस्म्यह मरे
भेदाय ते वपुषि भेदं निरूपय सुवेदो भविष्यसि ततः ।
मोद ङ्गमिष्यसि च खेदं व्यपोह्य रिपु साद ङ्करिष्यसि कपे !
नेदं वचोऽवितथ मैदंप्रकार मरिसूदोऽवद द्रविसुतम् ॥

---

खण्डा ॥ य द्यथाभूतं, तत्, एवं, स्यात्, अद्य, रिपुनोदेन, ते, हृदयमोदप्रदः, अस्मि, अरेः, भेदाय, ते, वपुषि, भेदं, निरूपय, ततः, सुवेदः, भविष्यसि, हे! कपे! इदं, वचः, नावितथं, रिपुसादं, करिष्यसि, खेदं, व्यपोह्य, मोदं, गमिष्यसि, अरिसूदः, ऐदंप्रकारं, रविसुतं, अवदत् ॥

व्याख्या ॥ स्या दिति ॥ यत्, यथाभूतं, तत्, एवं, स्यात्=भूयात्-अद्य=इदानीं - रिपुनोदेन=शत्रुनाशनेन, ते=तव, हृदयमोदप्रदः = हृदयानन्दकरः, अस्मि=भवामि-भाव्यर्थे वर्तमानप्रयोगः - अरेः=शत्रोः, भेदाय=विदारणाय - तादर्थ्ये चतुर्थी - ते, वपुषि = तावकदेहे, भेदं = भेदद्योतक चिह्नं - निरूपय - ततः=भेदचिह्नाङ्कनात् - सुवेदः=सुष्टुवेद्यः, भविष्यसि-हे! कपे! सुग्रीव! इदं, वचः, नावितथं=नानृतं, रिपोः वालिनः, सादं = नाशं, करिष्यसि, खेदं=दुःखं, व्यपोह्य=त्यक्त्वा, मोदं = आनन्दं, गमिष्यसि = लप्स्यसे, अरिसूदः=शत्रुनाशक श्श्रीरामः - ऐदं प्रकारं=अनेन प्रकारेण, रविसुतं=सुग्रीवं - अवदत्=जगाद ॥

भावः ॥ हे! सुग्रीव! तव शत्रुनाशने नाहं त्वत्सुखापादकः स्याम्-यद्यस्मा द्वालिनो विविक्तत्वं तव नास्ति त देवं स्यात् - अये! सखे! ते वपुषि वालिनो भेदं प्रकल्पय - ते नाह न्त्वा मभिज्ञास्यामि - त त्त्वदरिनाशनेन मोदं परं प्राप्स्यसि - नेद मनृतं - पश्येद मिति सुमुख न्त ङ्कपिवरं वालिना योद्धुम् प्रेरयामास ॥

---

कस्यापि विजये सन्देह एव-समरे तु प्रतियोद्धा तद्वशो भविष्यतीति वरान्वितस्स मया प्रतियोद्धु मशक्यः-अत स्त्वं न गच्छामि; त्वां प्रणमामीति सुग्रीवो युद्धाय गन्तुं निराचकार ॥

अव ॥ पुन र्युद्धाय सुग्रीवकृत वाल्याह्वानम् ॥

**धीरेण योद्धु मतिवीरेण वासवकुमारेण सूर्यतनय**
**श्शूरो नृपोक्तिभि रभीरु र्बभूव रिपुमाराय बद्धधिषणः ।**
**हारं विधृत्य तनुवैरूप्य माप्य धृति मारुह्य युद्धविधये**
**वैरं प्रतापसुगभीरं समाह्वय दुदारप्रगल्भवचनैः ॥**

खण्डा ॥ सूर्यतनयः, धीरेण, अतिवीरेण, वासवकुमारेण, योद्धुं, नृपोक्तिभिः, अभीरुः शूरश्च, बभूव - रिपुमाराय, बद्धधिषणः, सुग्रीवः, हारं, विधृत्य, तनुवैरूप्यं, आप्य, युद्धविधये, धृतिं, आरुह्य, उदारप्रगल्भवचनैः, प्रतापसुगभीरं, वैरं, समाह्वयत् ॥

व्याख्या ॥ धीरेणेति ॥ सूर्यतनयः=सुग्रीवः, धीरेण, अतिवीरेण = अत्यन्तपराक्रमवता, वासवकुमारेण = वालिना, योद्धुम्; नृपोक्तिभिः = श्रीरामराजवचनैः, अभीरुः=भयरहितः, शूरश्च, बभूव-रिपुमाराय=शत्रु-नाशनाय-बद्धधिषणः =कृतबुद्धिः, सुग्रीवः, हारं = सुममालाञ्च, विधृत्य= धृत्वा, तनोः, वैरूप्यं=वालिनो विभिन्न रूपभावं, आप्य=प्राप्य, युद्धविधये =संगरकर्मणे, धृतिं=धैर्यं, आरुह्य = लब्ध्वेत्यर्थः - उदाराणि, प्रगल्भानि च तानि वचनानीति समासः - तैः, उपलक्षितः सन् प्रतापे, सुगभीरं=सुष्टु गभीरं - वैरं=रिपुं - वैर इति विशेष्यवाचकः - श्लो ॥ अद्रिजातस्य या मूर्ति श्शशिन स्सज्जनस्य च । क्व सा वै रात्रिजातस्य तमसो दुर्जनस्य च ॥ इति नल चंपूकाव्योपोद्घाते-वैरशब्दस्य धर्मिवाचकत्वेन प्रयोगात् -समाह्वयत् =युद्धा-याह्वान श्चकार ॥

भावः ॥ तत श्श्रीरामे णोत्साहित स्सुग्रीव श्शौर्यवानिव शत्रुमारा योद्धतमति स्सपदि वालिनो विभिन्नरूपत्व द्योतनाय गळे सुमालंकृतिरूपांक माप्य धैर्य मवलं ब्यारि मुदारप्रौढवचोभि राह्वयत् ॥

---

विशे ॥ अत्रैदंप्रकार इति स्थले - अयं प्रकारो यस्येति बहुव्रीहिः, ततो भावार्थे अण् - एतादृशप्रयोगं कुमारसंभवे कालिदासः - वैलक्ष्य मुदाहरन्तीति एकादशस्सर्गे त्युदाहृतवान् - तत्रतु क्रियाविशेषण मि त्यलम् ॥

अथ ॥ श्रीरामकृतसुग्रीवसंवेदन मुपपाद्यते ॥

**मन्येऽय मर्कजनि रन्यप्रचोदितसुजन्येहयाऽऽगत इति**
**त्यन्यून मात्मगतमन्यु स्समेत्य शतमन्यो स्सुतोऽर्कजनुषम् ।**
**मन्याः प्रचूर्ण्य बहुदैन्यं निनाय गुणमान्य स्तदा रघुवर**
**श्चान्याय्य मेक्ष्य हृदि विन्यस्तचिह्न मनु वन्यं विवेद रविजम् ॥**

खण्डा ॥ अयं, अर्कजनिः, अन्यप्रचोदितसुजन्येहया, आगतः, इति, मन्ये-इति, शतमन्योः, सुतः, तु, अन्यूनं, आत्मगतमन्युः, अर्कजनुषं, समेत्य, मन्याः, प्रचूर्ण्य, बहुदैन्यं, निनाय-तदा, गुणमान्यः - रघुवरश्च - अन्याय्यं, एक्ष्य, हृदि, विन्यस्तच्चिह्नं, रविजं, वन्यं, अनुविवेद ॥

व्याख्या ॥ मन्य इति ॥ अयं, अर्कजनिः =सुग्रीवः, अन्येन प्रचोदिता =अन्यप्रचोदिता, शोभना, या, जन्ये =युद्धे विषये, ईहा - अन्यप्रचोदितसुजन्येहा - तया युक्तस्सन्, आगतः =युद्धाय प्राप्तः - इति मन्ये - इति =इत्थं, शतमन्योः =इन्द्रस्य, सुतः =पुत्रः, वाली तु, अन्यूनं =न्यूनं यथा न भवति तथा, आत्मनि गतो मन्यु र्यस्य स तथोक्तः - प्राप्तक्रोधस्सन्, अर्कजनुषं = सुग्रीवं, समेत्य =प्राप्य, मन्याः =ग्रीवायाः पश्चाद्भागेषु धमनीरिति यावत् - नि ॥ पश्चाद्ग्रीवासिरामन्या इत्यमरः-प्रचूर्ण्य =पिण्डीकृत्य, बहुदैन्यं =अतिदीनभावं - निनाय =अगमयत् - तदा - गुणमान्यः =गुणैः पूज्यः, रघुवरश्च = श्रीरामचन्द्रश्च - अन्याय्यं =न्याया दपेतं कर्म, एक्ष्य = समन्ता दीक्षित्वा, हृदि =मनसि, विन्यस्तचिह्नं =विधृतांकं, रविजं =सूर्यपुत्रं, वने भवं =वन्यं - कपिं, सुग्रीवं, अनुविवेद =अभिजज्ञे ॥

भावः ॥ अथ वाली - अयं सुग्रीवोऽन्यप्रचोदितः समरेच्छया पुन रिहागत - इति मत्वा द्विगुणीकृतक्रोध स्तं सुग्रीवं मर्मणि निहत्य, धमनीः प्रचूर्ण्य प्रबलदैन्य मनयत् - तदा दाशरथि स्तना ङ्कान्वित मात्मसखं सुग्रीव मभिज्ञातवान् ॥

अथ ॥ वालिवध उपवर्ण्यते ॥

हिंसाऽऽकरं युधि जिघांसुं स्वमित्रमवतंसं कपिष्विनकुलः
पुंसांवर स्तरुवरांसे पिधाय तनुमंसार्पितोत्तमधनुः ।
ध्वंसं नयन्निव नृसंसारबन्ध मभिशंसाई मिन्द्रतनयं
हंसात्मजादिकृतशंसोऽरथ द्धरिनृशंसं शरेण हृदये ॥

खण्डा ॥ पुंसां, वरः, इनकुलः, तरुवरांसे, तनुं, पिधाय, अंसार्पितोत्तमधनुः, युधि, हिंसाकरं, कपिषु, अवतंसं, स्वमित्रं, जिघांसुं, अभिशंसार्हं, हरिनृशंसं, इन्द्रतनयं, नृसंसारबन्धं, इव, ध्वंसं, नयन्, हंसात्मजादिकृतशंसः, हृदये, शरेण, अरथत् ॥

व्याख्या ॥ हिंसेति ॥ पुंसां, वरः = श्रेष्ठः, इनकुलं = इनस्य गोत्र मस्यास्ती त्यर्श आदिभ्योऽच्-यद्वा इनः=सूर्यः, कुलं=कुल्यः, समानकुलोद्भव यस्य स इति समानाधिकरणबहुव्रीहि रिति वा-काळिदासस्तु-रघुवंशे " प्रययावातिथेयेषु - रघुकुलः - इति प्रयोगं चकार । नि ॥ कुलं कुल्ये गणे देहे गेहे जनपदेपि चेति हैमः-श्रीरामः, तरुवरांसे=तरुस्कंधे, तनुं=शरीरं - पिधाय= आच्छाद्य, अंसे अर्पितं उत्तमं धनु र्यस्य स तथोक्तः - धृतकोदण्ड इति यावत् - युधि=युद्धे - हिंसाया आकरं, कपिषु=कीशेषु, अवतंसं=श्रेष्ठं - स्वमित्रं= आत्मन स्सखायं, जिघांसुं = हन्तु मिच्छुं, अभिशंसायाः=निन्दायाः, अर्हं= योग्यं, हरिषु=वानरेषु, नृशंसं=घातुकं - आततायिन मिति यावत् - इन्द्रतनयं =वालिनं - नृणां संसारबन्धमिव - यथा परमात्माऽखिलनरसंसारबन्धं ध्वंसं नयति तथैव वालिनमपी त्युपमा - ध्वंसं - नयन्, हंसात्मजः सूर्यतनय स्सुग्रीवः- नि ॥ भानु र्हंस स्सहस्रांशु - रित्यमरः - तदादिभिः कृताशंसा यस्य तादृशः= गदिताभिनुतिस्सन्, हृदये=वक्षसि, शरेण=बाणेन, अरथत् = हिंसा ञ्चकार रथहिंसासंराध्यो रिति दिवादिः ॥

भावः ॥ पुरुषोत्तम स्स रघुरामः हिंसाकारिणं युद्धे मित्रघातिन मिन्द्रतनयं, त मतिनृशंसं वालिनं, समीपस्थतरुवरस्कन्धदान्तरित स्सुग्रीवादिकपिजातकृतप्रशंसो ऽहनत् ॥

अव ॥ श्रीरामबाणाहतस्य वालिनो रामेण सह सम्भाषण मुपक्लृप्यते ॥

**धिग्राम! ते प्लवगनिग्राहिकां यदि ममाग्रे भवेः प्रतिभट**
**स्तूग्राहवे ष्वरिविनिग्राहकोऽह मिति सुग्राह्य मेव भवतः।**
**सुग्रीव मेत्य च ममोग्रापकार्यसि नृपाग्रेसरेति विहसन्**
**सोऽग्रे मृधं ह्यपत दुग्रप्रभञ्जनहतोग्रावनीजसदृशः॥**

खण्डा ॥ हे! राम! ते, प्लवगनिग्राहिकां, धिक्, त्वं, मम, अग्रे, प्रतिभटः, भवेः, यदि, अहं, उग्राहवेषु, अरिविनिग्राहकः, इति, भवतश्च, सुग्राह्यमेव, हे! नृपाग्रेसर! सुग्रीवं, एत्य, मम, उग्रापकारी, असि, इति, विहसन्, सः, उदग्रप्रभञ्जनहतोग्रावनीजसदृशः, अग्रेमृधं, अपतत् हि ॥

व्याख्या ॥ धिगिति ॥ हे! राम! ते=तव, प्लवगनिग्राहिकां=वानर-निग्रहविधिं - धिक्-कुत्सायां - त्वं, मम, अग्रे=पुरतः-प्रतिभटः=प्रतियोद्धा, भवेर्यदि; अहं - उग्राहवेषु=भयंकरसमरेषु, अरीणां, विनिग्राहकः - विशेषेण निग्राहकः, इति=एवं - भवतश्च=तवापि, सुष्ठु, ग्राह्यमेव-ज्ञेयमेव-भवेदिति शेषः; हे! नृपाग्रेसर! श्रीरामराज! सुग्रीवं - बलशून्य मित्यभिप्रायः - एत्य = प्राप्य, मम, उग्र मपकरोती त्युग्रापकारी, असि = भवसि - इति = इत्थं, विहसन् - साभिप्रायं हसन्, सः=वाली, उदग्रप्रभंजनेन = महावातेन, हतो यो महावृक्षः, तेन सदृशः=सदृक्ष, मृधस्याग्रे=अग्रेमृधं-अपत द्धि=पपात हि ॥

भावः ॥ हे! राम! तव बलं धिक्। यदि त्व म्ममाग्रे प्रतियोद्धा अभविष्यः-तदाऽहं निग्राह्यो वा उत निग्राहकोवा इति ते सवेदन मभविष्यत्-त्वन्तु दुर्बलं सुग्रीवे देहसौन्दर्यमाले णाबद्धस्नेहः मम मरणरूपापकार मकरोः - इति विकृ-ताट्टहासं कुर्व न्स वाली प्रभंजनहत स्तरुरि वायोधनभूमौ पपात ॥

विशे ॥ अत्र - संसारबन्धमिवे त्युपमया वालिंससारबन्धयो रुपमानो-पमेयभावः। ध्वंसरूप सामान्यधर्मे णोपमा - तयोपमया यथा मोक्षार्थिजनानां संसारः प्रतिबन्धक स्तथा सुग्रीवस्यापि वाली सुखप्रतिबन्धक इत्यर्थो लभ्यते-तस्मा दत्रोपमालंकारेण वस्तुध्वनि र्विवक्षितवाच्यः ॥

अव ॥ श्रीरामेणानुनयपूर्वकं वालिनो बाणमोचनप्रकारवर्णनम् ॥

**यो यन्त्वजीवत दमेयाशुगेन स तु भूय स्तमेत्य रघुभूः
कायक्षये मनसि मायाहि दैन्य मिह याया स्त्व मुत्तमगतिम् ।
न्याया दपेतनर मायाति नष्ट मयि! नायं वधोऽतिकृपणो
जीया त्स्वधर्म इति नायंवद न्प्लवगकाया द्व्यपानय दिषुम् ॥**

---

खण्डा ॥ यः, अमेयाशुगेन, यं, तु, अजीवनत् , सः, रघुभूः, भूयः, तं, एत्य, अयि! कायक्षये, मनसि, दैन्यं, मायाहि - इह, त्वं, उत्तमगतिं, यायाः, न्यायात्, अपेतं, नरं, नष्टं, आयाति - अयं, वधः, अतिकृपणः, न, स्वधर्मः, जीयात् - इति, नायं, वदन्, प्लवगकायात्, इषुं, व्यपानयत् ॥

व्याख्या ॥ य इति ॥ यः=श्रीरामः, अमेयाशुगेन = अतिमहिमेन बाणेन, यं=(वालिनन्तु), अजीवतत्=घातयामास, सः, रघुभूः=श्रीरामचन्द्रः - भूयः=बाणप्रयोगानन्तरं, तं = वालिनं, एत्य = प्राप्य - तस्य सन्निधिं गत्वेति यावत् - अयि! हे! प्लवगाधिप! कायक्षये=शरीरनाशे, विषये, मनसि=हृदये, दैन्यं = दीनभावं - मायाहि = माप्नुहि - इह - इदानीं मच्छरपातेन - त्वं, उत्तमगतिं; यायाः=लभेः - न्यायात्=नीतेः, अपेतं; नरं=मनुजं, नष्टं=नाशः, आयाति=आप्नोति - अयं वधः=मया कृतोऽयं वधः; अतिकृपणः=अतिनीचः, न - न भवति - स्वधर्मः - जीयात् - श्लो ॥ स्वधर्मे निधनं श्रेयः परधर्मो भयावहः - क्षत्रियाणां वनमृगहननं युक्तं स्वधर्मश्च-किंच सोदरापकृतिनोऽधर्मगस्य तव वध उचित एव - इति = एवं - नायं = नीतिं, तदनुसारिवचन मित्यर्थः, वदन्, प्लवगकायात् = वालिनः कळेबरात् - इषुं = विशिखं - व्यपानयत्= मोचयामास ॥

---

विशे ॥ अत्र विशेष्यभूतसुग्रीवशब्दे सौन्दर्यद्योतकताऽस्ति - तादृशसाभिप्रायवद्विशेष्यविन्यसना त्परिकरांकुरालंकारध्वनिः - उग्रावनीजसदृशो वाली पपातायोधन इत्यत्रोपमालंकारो वाच्यभूतः - अतोऽत्रोपमापरिकरांकुरयोः वाच्यव्यंग्ययोः संसृष्टिः ॥

अथ ॥ मृतिकाले श्रीरामं प्रति वालिवाक्यम् ॥

**योगेन रामशरनागस्य पूततनुभाग स्स जिष्णुतनयो**
**योगीश! किं वद मयाऽऽगो ह्यकारि तव रागोऽद्य कोऽर्कतनये।**
**भोगा द्युपात्त मिह, भोऽगां सुमुक्ति मथ मे गात्रजोऽस्तु युवरा**
**ड्वेगा दुदीर्य क्रमशोऽगा दसुप्रलययोगश्च सोऽन्तसुकृतेः ॥**

खण्डा ॥ रामशरनागस्य, योगेन, पूततनुभागः, सः, जिष्णुतनयः, हे! योगीश! मया, किं, आगः, तव, अकारि, अद्य, अर्कतनये, रागः, कः, वद, इह, भोगादि, उपात्तं, भो! सुमुक्तिं, अगां, अथ, मे, गात्रजः, युवराट्, अस्तु, इति, वेगात्, उदीर्य, सः, क्रमशः, अन्तसुकृतेः, असुप्रलययोगं, च, अगात् ॥

व्याख्या ॥ योगेनेति ॥ रामशर एव नागः=सर्पः-तस्य – नि ॥ नागं नपुंसकं रंगे सीसके कारणान्तरे । नागः पन्नगमातंगक्रूराचारिषु तोयदे-इति मेदिनी – योगेन=संबन्धेन, पूतः तनुभागः यस्य सः तथोक्तः - सः, जिष्णुतनयः=इन्द्रनन्दनो वाली – हे! योगीश! श्रीराम! मया – कि मागः - कोऽपराधः - तव, अकारि=कृतं - अद्य=इदानीं - अर्कतनये=सुग्रीवे - रागः= अनुरागः - कः - वद ब्रूहि - इह=अस्मिन् लोके, भोगादि = सौख्यादिकं - उपात्तं - मया प्राप्तं – भो! हे! राम! सुमुक्तिं=मोक्षञ्च, अगां=प्राप्तप्रायमेव - भगवता त्वया हतस्य मेऽपवर्गो निस्सन्देह एवेत्यभिप्रायः–अथ=मदनन्तरं- मे – गात्रजः=पुत्रोऽङ्गदः, युवराट्=किष्किन्धाराज्यश्रियो युवराजः – अस्तु =भवतु - प्रार्थने लोट् – इति=एवं - वेगात्=अतिसत्वरं – उदीर्य=उक्त्वा,

भावः ॥ अथ श्रीराम स्तं वालिनं समेत्य – कपे! वालिन् इदानी न्त्वं बाणा न्मोक्ष्यसे - बाणमोचनानन्तर न्त्व मुत्तमगतिञ्च लप्स्यसे। अतोऽयं वधः नीचः इति मामंस्थाः –इति बाणमोचन मकरोत् ॥

विशे ॥ अत्र श्रीरामे णोक्तधर्मवाक्यै र्लोकन्यायेन चैव मुत्तरत्रा प्यन्यकळत्रासक्तस्य - रावणस्य - अधर्मप्रवृत्ते र्नाश स्यौचित्यं सूच्यते, (धर्मसंस्थापनार्थ मवतीर्णस्य श्रीरामस्य वाक्ये - जीया त्स्वधर्म - इत्यस्यात्यन्तयुक्तत्वा च्चात्र रावणस्यापि नाश मवितर्कितोपनतं भवेदिति ध्वन्यर्थः) ॥

अव ॥ सीतां प्रत्यानेतुं दत्तवाच स्सुग्रीव स्याभिषेचनवर्णनम् ॥

नो रामचन्द्र ! भवतारि र्व्यमारि कपिशूर स्स वालिहतक
स्ते रावणात्त मपकारं व्यपोह्य रिपुसारं विनाश्य सुकरम् ।
दारा न्नयेय मिति धीरं वद न्प्लवगवीर स्स रामवचना
त्तारेयमारुतकुमारादिभि स्स्वपुरभारेऽभ्यषिच्यत मुदा ॥

---

खण्डा ॥ हे! रामचन्द्र! कपिशूरः, नः अरिः, सः, वालिहतकः भवता, व्यमारि - ते, रावणात्तं, अपकारं, व्यपोह्य, रिपुसारं सुकरं, विनाश्य, दारान्, नयेयं, इति, धीरं, वदन्, सः, प्लवगवीरः, रामवचनात्, तारेयमारुतकुमारादिभिः - मुदा, स्वपुरभारे, अभ्यषिच्यत ॥

व्याख्या ॥ न इति ॥ हे ! रामचन्द्र ! श्रीराम ! कपिषु = वानरेषु, शूरः=पराक्रमवान् , नः=अस्माकं, अरिः=शत्रुः - सः - वालिहतकः= नीचवाली, भवता - व्यमारि=मृतिं प्रापवान् - ते=तव - रावणे नत्त=राव-णात्त - अपकारं=दारहरणरूपापकारं, व्यपोह्य=व्यपनीय-रिपुसारं=शत्रुबलं, सुकरं=सुलभं, विनाश्य=विनाशं नीत्वा, दारान्=भार्यां - नयेयं - त्वा मिति शेषः - इति=एवं - धीरं यथा तथा, वदन् = ब्रुवन् , सः, प्लवगवीरः= कपिप्रवीरः; सुग्रीवः - रामवचनात्=श्रीरामवाक्यात् , तदाज्ञयेति भावः -

---

सः - वाली - क्रमशः=क्रमेण - अन्तसुकृतेः=अन्तकाललब्धपुण्यात् - असूनां प्रलययोगञ्च=नाशसंबन्धञ्च - मृति मिति भावः - अगात्=अलभत ॥

भावः ॥ श्रीरामोत्सृष्टबाणहत स्स वाली तं प्रत्यन्ते - श्रीराम! ममाप-राधः कः?, कोऽय मनुरागोऽर्कतनये? नैत न्महात्मनां युक्तं - तथा प्यहं भोगा-दिक मस्मिन् लोकेऽन्वभूवं, परत्र विषयेपि इदानीं त्वद्बाणपाते नोपात्तमरणोऽहं ध्रुव म्मोक्ष ङ्गमिष्यामि; तस्मा न्मे न कोपि विचारः - अपितु ममात्मज स्त्वङ्गदो युवराड् भूया दित्युक्त्वोपरराम ॥

विशे ॥ अत्र वालिकृतश्रीरामसंबोधने - योगीश - इत्युपयुक्तः सर्वपदा-र्थेषु विरक्तस्य - योगीश्वरस्य तवापि पक्षप्रतिपक्षभावोऽस्ती त्युपालंभोद्बोधकः ॥

अव ॥ सुग्रीवाभिषेकानन्तरं राघवयो स्स्थिति रुपवर्ण्यते ॥

**प्रत्यर्थिसोदरवधात्यन्तमोद मधिगत्यार्कजोऽपि कृपणः**
**प्रत्यग्रराज्यसुखभूत्या च व्यस्मर दनीत्या तु रामविषयम् ।**
**हृत्या जने नृपति रेत्यातिदुःख मनुसृत्याऽनुजस्य बलव**
**द्धृत्याऽध्युवास रिपुकृत्यं स्मर न्विगतकृत्य स्स माल्यवदगम् ॥**

---

खण्डा ॥ कृपणः, अर्कजः, अपि, प्रत्यर्थिसोदरवधात्यन्तमोदं, अधिगत्य, प्रत्यग्रराज्यसुखभूत्या, अनीत्या, च, रामविषयं, तु, व्यस्मरत् - जनैः - हृत्या, नृपतिः, अतिदुःखं - एत्य, अनुजस्य, अनुसृत्या, रिपुकृत्यं, स्मरन्, विगतकृत्यः, सः, बलवद्धृत्या, माल्यवदगं - अध्युवास ॥

व्याख्या ॥ प्रत्यर्थीति ॥ कृपणः = नीचः, कृतघ्न इति यावत् - अर्कजोऽपि = सुग्रीवोऽपि, प्रत्यर्थिभूतो य स्सोदरः, तस्य वधात्, अत्यन्तमोदं = अपरिमितानंदं - विरोधिभूतवालिवधतोषं - इति यावत्, अधिगत्य = लब्ध्वा, प्रत्यग्रराज्यसुखस्य, भूत्या = वैभवेन, अनीत्या = अनयेन च, रामविषयन्तु =

---

तारेयमारुतकुमारादिभिः = अंगदांजनेयादिभिः, मुदा = सन्तोषेण, स्वपुरभारे = किष्किन्धानगरराज्ये - अभ्यषिच्यत = अभिषिक्तः ॥

भावः ॥ हे! रामचन्द्र ! भवता 'ममारि र्व्यमारि; इतःपरं तवारि श्चान्विष्य, वधं विधाय त्वदीयात्मपत्नीं सीतां समर्पयिष्य इति समयपूर्वकालापं कुर्वन् श्रीरामचन्द्रप्रेरितांगदहनुमदादिभि स्सुग्रीवो राज्यभारे न्ययुज्यत ॥

विशे ॥ अत्र सुग्रीवसम्भाषणे - ममारिर्व्यमारि-तेऽराति म्मारयिष्यामि; त्वत्साहाय्ये नाहं मत्पत्न्या संगतः,अहं तवात्मपत्नीं समर्पयिष्यामि । ममाभिषेकेण सर्व मुपपन्नं म्भविष्यती त्यनेन नाहो ! मूढोऽयं सुग्रीवः - श्रीरामचन्द्रं मोक्षप्रदायिनं परस्परोपकारकांक्षया सिशेवे - अपि चानन्तमोक्षसाम्राज्यदातारं प्राप्यापि लौकिककल्पराज्याभिषेकमपि समयाचारे णार्थितवान् - एतादृङ्मूढः कश्चन नास्ति - गुहोपि गंगां तारयित्वा मैत्रीरूपान्तरं लेभे - तस्माद प्यय म्मूढतरः, इति द्योत्यते ॥

अथ॥श्रीरामेण हनुमद्द्वारासुग्रीवप्रबोधनं,सुग्रीवप्रेषितकपीनांसीतान्वेषणप्रस्थानञ्च

**चोराहृतांस्तु निजदारान्विचेतु मरिमाराय चार्कतनयं**
**धीरेण मारुतकुमारेण शूररघुवीरो व्यबोधय दरम् ।**
**श्रीरासुतार्थं मथ सूरात्मजप्रहित शूरप्लवंगविततौ**
**वीराय मारुतकुमाराय रामनृपवीरोऽङ्गुळीयक मदात् ॥**

---

खण्डा ॥ शूररघुवीरः, चोराहृतान्, निजदारान्, तु, विचेतुं, अरिमाराय, च, अर्कतनयं, अरं, धीरेण, मारुतकुमारेण, व्यबोधयत् , अथ, रामनृपवीरः, श्रीरासुतार्थे-सूरात्मजप्रहितशूरप्लवंगविततौ, वीराय, मारुतकुमाराय, अंगुळीयकं अदात् ॥

व्याख्या ॥ चोराहृता निति ॥ शूर श्चासौ रघुवीरश्चेति तथोक्तः= पराक्रमवा न्रामः - चोरेण, रावणनाम्नाऽसुरेण, आहृतान्, अपहृतान्, निजदारान्=स्वजायां तु - नि ॥ दाराः पुंसि च भूम्न्येव-इत्यमरः-विचेतुं=अन्वेष्टुं अरिमाराय च=शत्रुसूदनाय च, अर्कतनयं = सुग्रीवं, अरं=सत्वरं, धीरेण= धैर्यवता, मारुतकुमारेण=हनुमता, व्यबोधयत्=बोधयामास - अथ -रामनृपवीरः=श्रीरामचन्द्रः-श्रिया=शोभया विशिष्टा, इरायाः=भुवः, सुता=कन्या, सीतेति यावत् - तस्यै = श्रीरामसुतार्थे, सूर्यस्य आत्मजः=सुग्रीवः - तेन, प्रहितशूरप्लवंगविततौ = प्रेषितपराक्रमवद्वानरबृन्दे, वीराय, मारुतकुमाराय= हनुमते, अंगुळीयकं=ऊर्मिकां, अदात्=ददौ ॥

---

श्रीरामचन्द्राय कर्तव्योपकारविषयन्तु, व्यस्मरत् - जनेः=भार्यायाः - हृत्या= हरणेन, सः, नृपतिः=श्रीरामचन्द्रः, अत्यन्तं दुःखं, एत्य, रिपुकृत्यं = शत्रोः रावण स्याचरितं, स्मरन्=स्मारं स्मारं - विगतानि कृत्यानि यस्य तादृशस्सन्, अपि, अनुजस्य=लक्ष्मणस्य, अनुसृत्या=अनुसरणेन हेतुना, बलवद्धृत्या= अतिधैर्येण, माल्यवन्नामान मगं=अद्रिं - अध्युवास ॥

भावः ॥ सुग्रीव स्स्वशत्रुहन्तारं श्रीरामचन्द्रं, तल्लब्धोपकारञ्च विस्मृत्य - नूत्नराज्यसुखानुभूत्या प्रमत्तोऽभूत् - दाशरथिस्तु वैरिणा कृतमायादिकस्मरणेन विस्मृतान्यकार्यकरणो माल्यवन्नगेऽनुजेन सहोवास ॥

अथ ॥ कपीनां सम्पातिदर्शनप्रकार उपनिबद्ध्यते ॥

दक्षा स्समीकगुरुशिक्षा स्समीरसुतपक्षाङ्गदादिकपयो
दीक्षां विधाय कमलाक्षप्रियां सुरविपक्षं विचेतु मगमन् ।
नैक्षन्त ते त्ववनिजाक्षीणरूप मपि साक्षा द्बभूव खगरा
डक्षीणलब्धखलरक्षोगणेशचरितोऽक्षोभदः कपिततेः ॥

खण्डा ॥ दक्षाः, समीकगुरुशिक्षाः, समीरसुतपक्षांगदादिकपयः, दीक्षां, विधाय, कमलाक्षप्रियां, सुरविपक्षं, च, विचेतुं, अगमन्, ते, तु, अवनिजाक्षीणरूपं, नैक्षन्त, अपि–कपिततेः, अक्षीणलब्धखलरक्षोगणेशचरितः, खगराट्, अक्षोभदं यथा तथा, साक्षाद्बभूव ॥

व्याख्या ॥ दक्षा इति ॥ दक्षाः=समर्थाः, समीके=युद्धे, गुरुशिक्षाः=अधिकशिक्षावंतः - समीरसुतस्य, पक्षे स्थिताः–अंगदः आदिः येषां कपीनां =तथोक्ताः कपयः, दीक्षां, विधाय , धृत्वा, कमलाक्षस्य = श्रीरामचन्द्रस्य, प्रियां=जायां - सुरविपक्षञ्च - सुरारिं रावणञ्च - विचेतुं=अन्वेष्टुं - अगमन् =जग्मुः - ते तु=कपयस्तु-अवनिजायाः=सीतायाः, अक्षीणरूपं=अकृशीभूतस्वरूपं - नैक्षन्त=नावालोकिषत–अपि=तथापि- कपिततेः=वानरबृन्दस्य, खलो रक्षसां गणेशः=खलरक्षोगणेशः - तस्य चरितं - अक्षीणं यथा तथा लब्धं खलरक्षोगणेशचरितं येन सः तथोक्तः - खगराट् = सम्पातिः - अक्षोभदः सीतावृत्तान्तकथनद्वारा=क्षोभाभावदः सन् - साक्षाद्बभूव ॥

भावः ॥ हनुमज्जांबवदङ्गदादियुद्धवीरा अतिसमर्थाः कपय स्सीतां - रावणञ्च विचेतुं कृतप्रतिज्ञा स्सर्वत्रागमन्–तथापि ते सीतारूपं न ददृशुः–किन्तु तेषा ङ्कपीनां विदितरावणवृत्तान्त स्सम्पातिर्नाम गृध्रराट् साक्षादभवत् ॥

भावः ॥ गते वार्षुके काले मारुतिप्रेरित स्सुग्रीव स्सत्वर मनेकशूरभटान्, कपिवीराधिवीरान् दिश श्चतस्रो गमयामास सीतान्वेषणाय; तदनु श्रीरामचन्द्रो विश्वासपात्राय, शूराय महितात्मने हनुमते स्वाभिज्ञापकं स्वकरांगुळीयक न्दत्वाऽगमयत् ॥

अव ॥ अथ कपीनां समुद्रतीरस्थिति रुपवर्ण्यते ॥

या तैं श्श्रुता धरणिजाताप्रवृत्ति रनुयाता स्तु ता क्कपिवरा
स्ते ताव दापु रतिभीतिप्रदाब्धि मनुपेतात्मकामितफलाः ।
स्फीत न्तरेम कथ मेतं पयोधि मिति जातातिसंशयधियो
वातात्मजादिहरयोऽतीव पांडिमपरीताननाः स्समभवन् ॥

---

खण्डा ॥ तैः, या, धरणिजाताप्रवृत्तिः, श्रुता, तामनु, याताः, ते, कपिवराः, तु, अनुपेतात्मकामितफलाः, अतिभीतिप्रदाब्धि, तावत्, आपुः, स्फीतं, एतं, पयोधिं, कथं, तरेम, इति, जातातिसंशयधियः, वातात्मजादि-हरयः, अतीव, पांडिमपरीताननाः; समभवन् ॥

व्याख्या ॥ येति ॥ तैः=वातात्मजादिभिः, या, धरणिजातासम्बन्धिनी प्रवृत्तिः=वार्ता, नि ॥ वार्ता प्रवृत्ति र्वृत्तान्त उदन्त स्स्या दथाह्वय-इत्यमरः-श्रुता, तां=प्रवृत्ति मनु, याताः=गताः, ते, कपिवराः=वानरास्तु-अनुपेतात्मकामित फलाः=अलब्धात्माभिलाषप्रयोजना स्सन्तः-अत्यन्तं भीतिप्रद श्चासा वब्धि-श्चेति समासः - तं -तावत्-आपुः=प्रापुः-स्फीतं=विशालं, एतं=पुरोवर्तिनं, पयोधिं=समुद्रं, कथं=केन प्रकारेण, तरेम=पारं गच्छेम? इति=इत्येवं - जाता अतिसंशययुता धी येषा न्ते तथोक्ताः - वातात्मजः=हनुमान्, आदि र्येषां हरीणां ते वातात्मजादिहरयः - अतीव=अत्यन्तं - पांडिम्ना परीतानि आननानि येषा न्ते तथोक्ताः - समभवन्=बभूवुः ॥

भावः ॥ या सीताप्रवृत्ति स्सम्पातिना तै श्श्रावि ता मनुसृत्य किंचि द्दूर ङ्गत्वा समुद्रतीरं प्रापुः-तथा याता स्ते 'कथ मिम मुत्तारयिष्याम' इति जातसंशया मारुतात्मजादय स्स्वाननेषु धावळ्यपरीता बभूवुः ॥

---

विशे ॥ अत्र यं रावणं विचेतुं कपयो वने व्यचरं स्तत्रैव तद्रावण-चरितवेत्तारं खगपति मद्राक्षु रित्यनेन प्रहर्षणालङ्कारोऽस्ति- श्लो ॥ उत्कण्ठि-तार्थसंसिद्धि विना यत्नं प्रहर्षण मिति लक्षणात् ॥

विशे ॥ लोके सामान्येन - इष्टवस्तुप्राप्तिकाले प्रतिबन्धकदर्शनेन मुखेषु पांडुरता जनानां संजायते; तद्व दत्रापि कपीश्वराः प्रतिबन्धकसमुद्रोत्तरणविषयकसंशयेन पाण्डुरमुखा आसन् ॥

गद्य ॥ इति श्रीमद्धयानन पादारविन्दवरिवस्यासादि
तोभयकवितावता श्रीमल्लङ्कोपनामक श्रीशिव
रामशास्त्रितनूभवेन, श्रीसीतारामशास्त्रिणा
विरचिते, तत्त्वबोधिन्याख्यव्याख्यो
पेते श्रीसीतारामायणे
किष्किन्धाकाण्डः
समाप्तः

# सुन्दरकाण्डः

अव ॥ अथ हनुमतोऽब्धितरणे वानरशंकापनोदनप्रकारः ॥

ङ्कारजोऽथ जनपङ्कापह स्सुदृढसङ्कल्पवा न्स हनुमान्
शङ्काकुलस्वजनसङ्कोचनोदनचणाङ्कां विधृत्य सुतनुम् ।
लङ्कां समेत्य हरिणाङ्काक्ष्युदन्त मविशङ्क ह्ययेऽर्णवतट
स्याङ्के स्त कूलतरसङ्काश मेत दिति शङ्कापनोद मतनोत् ॥

खण्डा ॥ अथ, ओंकारजः, जनपङ्कापहः, सुदृढसंकल्पवान्, सः, हनुमान्, शंकाकुलस्वजनसंकोचनोदनचणांकां, सुतनुं, विधृत्य, लंकां, समेत्य, हरिणांकाक्ष्युदन्तं, अविशंकं यथा तथा, अये, अर्णवतटस्य, अंके, स्त, यूयमिति शेषः - एतत्, कूलतरसंकाशं, इति, शंकापनोदं - अतनोत् ॥

व्याख्या ॥ ओङ्कार इति ॥ अथ = सुग्रीवाज्ञया कपीनां सीतान्वेषण प्रस्थानानन्तरं, ओङ्काराज्जात इति=ओंकारजः, ओमितीदगं सर्वमिति श्रुतेः- जनानां पंक मपहन्तीति - जनपंकापहः; सुदृढः संकल्पः अस्यास्तीति सुदृढ संकल्पवान्, सः, सुग्रीवादीनां विश्वसनीय इति पूर्वपरामर्शः - हनुमान्, शंकाकुलश्च=भयाकुलितश्चासौ स्वजनश्च=जांबवदाद्यात्मजनः-तस्य य स्संकोचः कथ मब्धि तरेमेति बुद्ध्या जातो जडिमा, तस्य नोदने=अपनयने, चणः अंकः यस्यां तां - तथोक्तां - शोभना चासौ तनुश्चेति - सुतनुः, तां, विधृत्य = धृत्वा, लंकां=रावणनगरीं, समेत्य=प्राप्य, हरिणाना मंको लक्षणमिव लक्षणं ययोस्तादृशी अक्षिणी यस्या स्सा = हरिणांकाक्षी - मृगाक्षीति यावत्-तस्या स्सीतायाः; उदन्तं=वार्तां, अविशंकं यथा तथा - शङ्का यस्मि न्कर्मणि न भवति त त्तथा-अये=ज्ञास्यामीति यावत्-अय गता विति धातो र्भाव्यर्थे वर्तमान प्रयोगः - अर्णवतटस्य=समुद्रतीरस्य - अंके=उत्संगस्थाने, स्त = भवथ - यूय मिति शेषः, एतत्=इदं समुद्रतरणं-कूलतरसंकाशं=कुल्यावतरणसदृशं- इति=इत्थं - शंकायाः=भीतेः - अपनोदं=अपनयनं - अतनोत् = चकार, तनु विस्तारे - इति तनादि रुभयपदधातुः ॥

अथ ॥ समुद्रोपर्याञ्जनेयोड्डयन मुपपाद्यते ॥

**तारेयजांबवदुदाराच्छभल्लमुखवीरैः प्रचोदितमति**
**र्धीर स्स विघ्नपरिहाराय देव मनुवारं प्रणम्य सहसा ।**
**वारान्निधे रुपरि तारायने चरितु मारभ्य वायुतनय**
**स्स्वैरं ह्यचीचल दपारात्मसत्त्व मनु चारी दिशः परिमृशन् ॥**

---

खण्डा ॥ तारेयजांबवदुदाराच्छभल्लमुखवीरैः, प्रचोदितमतिः-धीरः, सः, वायुतनयः, विघ्नपरिहाराय, सहसा, देवं, अनुवारं, प्रणम्य, वारांनिधेः, उपरि, तारायने, चरितुं - आरभ्य, अपारात्मसत्त्वं, अनु, चारी, दिशः, परिमृशन्, स्वैरं, अचीचलद्धि ॥

व्याख्या ॥ तारेय इति ॥ तारायाः अपत्यं पुमान् तारेयः = अंगदः, उदार श्चासा वच्छभल्लश्च-उदाराच्छभल्लः, नि ॥ ऋक्षाच्छभल्लभल्लूकाः- इत्यमरः - जांबवान्नामा-उदाराच्छभल्लः - तौ मुखे येषां (वीराणां) तै र्वीरै रित्यर्थः - अंगदजांबवत्प्रभृतिकपिवीरैरिति यावत् - प्रचोदिता=प्रेरिता, मतिः =बुद्धिः यस्य सः तथोक्तः, धीरः, सः, वायुतनयः=अनिलजो हनुमान्, विघ्न-परिहाराय, निरंतरायात्मगमनार्थं - सहसा=द्रुतं - देवं=भगवन्तं, वारंवारं= अनुवारं, प्रणम्य = नमस्कृत्वा, वारांनिधेः = अब्धेः - उपरि; ताराणां = नक्षत्राणां - अयनं - तस्मिन्, नभोमार्गे इति यावत् - चरितुं=गंतुं - चर गता-विति धातो स्तुमुन् - आरभ्य = प्रारंभं कृत्वा, अपारश्च तदात्मन स्सत्त्वञ्चे त्यपारात्मसत्त्वं - अनुसृत्य - चारी - चरितुं शीलमस्येति तादृशः-दिशः-परि-मृशन्=परामर्शनं कुर्वन् - स्वैरं - अचीचलद्धि=प्रातिष्ठ दित्यर्थः ॥

---

भावः ॥ ओङ्कारसंभवो दृढसंकल्पवा न्हनुमान् - विपुलातिविपुलरूपं विधृत्य - अयि! सखायः! लंकां गत्वा सीतावृत्तान्तं वो निवेदयिष्ये - यूय मत्रै वाब्धेस्तटे स्थिता स्स्त - मम समुद्रतरणं कुल्यातरणसदृक्षं प्रतिभाति; शंकां त्यजथ - इति बभाण ॥

अत्र । अब्धि तितीर्षो राञ्जनेयस्य तदुपचारवाक्य मुपवर्ण्यते ॥

सापायमार्ग इति सोऽपांपति र्बहुविधोपायनै रनिलज
स्तापापनोदनिपुणोपाय माह रघुभूपार्थसाधनपरम् ।
गोपायितोऽस्ति हरिकोपा देकगिरि रापातितो हि पवने
नापोह्य तत्र तनुतापं ततः परदुरापां व्रजासुरपुरीम् ॥

---

अन्वयः ॥ पुरा, हरिकोपात्, एकगिरिः, पवनेन, आपातितः, गोपायितश्च, अस्ति, तत्र, तनुतापं, अपोह्य, ततः, परदुरापां, आसुरपुरीं, व्रज, इति, सः, अपांपतिः, सापायमार्गः, इति, बहुविधोपायनैः, रघुभूपार्थसाधनपरं, अनिलजं, तापापनोदनिपुणोपायं - आह ॥

व्याख्या ॥ सापाय इति ॥ पुरा = पूर्वस्मिन् काले, हरेः = इन्द्रस्य, कोपात्, एकगिरिः, मैनाक इति हिमवतस्सूनुः, पवनेन = वायुना, आपातितः-मज्जले इति शेषः- गोपायितश्च = मया, संरक्षितश्च-अस्ति, तत्र = तस्मिन्नद्रौ, तनुतापं = देहायासं, अपोह्य = व्यपनीय - ततः = तदनन्तरं, परैः = शत्रुभिः - यद्वा त्वत्तः-अन्यैः, दुरापां = दुष्प्रापां, आसुरपुरीं = लङ्कानगरीं - व्रज = गच्छ, सः, अपांपतिः = समुद्रः, सापायोऽसौ लंकामार्गः, इति = इत्येवं, बहुविधैः - उपायनैः = उपहारैः साकं, रत्नाकरत्वा दव्यैः, रघुभूपस्य = श्रीरामस्य, अर्थं = प्रयोजनं - तत्साधने, परं = आसक्तं - अनिलजं = हनुमन्तं, तापस्य, अपनोदने निपुण श्चासा वुपायः - तं - आह = अब्रवीत् ॥

भावः ॥ हे! वायुज! अय मब्ध्युपरि लंकामार्ग स्सापायः-तत्र तव श्रम श्चाधिको भविष्यति; कार्य मिदं श्रीरामसम्बन्धि - इत्येवन्विधै वाहं पुराकिल पक्षाहतिभीतेन येन मैनाकेन प्रार्थित स्तदवन मकरवं सोऽत्र मिदानीं विश्रान्ति

---

भावः ॥ अंगदादिवानरैः प्रेरित स्स हनुमान् अब्धितरणे निर्विघ्नत्वाय भगवन्तं मुहुर्मुहुः प्रणम्यापांनिधे रुपर्याकाशे - नैजबल मनुस्मृत्योड्डयन मकरोत् ॥

विशे ॥ अत्राब्धिसंतरणयोग्योऽयं वायुतनय इत्यंगदादीनां विश्वासोपबृंहक मपारात्मसत्त्व मनुरुध्यांजनेयस्य प्रस्थानम् ॥

अव ॥ हनुमता मैनाकनिराकरणं; सुरसागर्वापोहनञ्च ॥

**वीक्षे कदा हि वनजाक्षी मिति प्रबलदीक्षान्वितः कपिवर**
**श्चक्षुर्गतं विपुलपक्षान्वित न्नग मुपेक्षाञ्चकार हनुमान् ।**
**दक्षाऽऽगता हरिपरीक्षाकृते सुरविपक्षाश्रितेव सुरसा**
**यैक्षिष्ट ता मुचितशिक्षा न्निनाय समरेऽक्षीणपौरुषयुतः ॥**

---

खण्डा ॥ वनजाक्षीं, कदा, हि, वीक्षे-इति, प्रबलदीक्षान्वितः, कपिवरः, हनुमान्, चक्षुर्गतं, विपुलपक्षान्वितं, नगं, उपेक्षाञ्चकार, दक्षा, या, सुरसा, हरिपरीक्षाकृते, सुरविपक्षाश्रिता, इव, आगता, तां, ऐक्षिष्ट-अक्षीणपौरुषयुतः, समरे, उचितशिक्षां, निनाय, च ॥

व्याख्या ॥ वीक्षे इति ॥ वनजे इव अक्षिणी यस्या स्सा=वनजाक्षी= सीता - तां - कदाहि; वीक्षे=पश्येयं-भाव्यर्थे वर्तमानप्रयोगः-इति=इत्येवं - प्रबला च सा दीक्षा च=प्रबलदीक्षा-तया-अन्वितः=युक्तः-कपिवरः=वानर- श्रेष्ठः; हनुमान्; चक्षुषी गतं=चक्षुर्गतं=प्रत्यक्षीभूतं-विपुलपक्षाभ्यां - अन्वितं = उपेतं - नगं=मैनाकगिरिं, उपेक्षां चकार=उपेक्षाभावे नापश्यत् - दक्षा =समर्था, या-सुरसा=तन्नाम्नी-हरेः=वानरस्य हनुमतः, परीक्षार्थे=परीक्षा- कृते-सुराणां विरुद्ध मसुराणां पक्ष माश्रितेव=स्वतोऽमरै र्हनुमत्परीक्षार्थं प्रहि- तापि राक्षसप्रेरितेव - आगता; तां=सुरसां - ऐक्षिष्ट = ददर्श - अक्षीणं तत् पौरुषञ्चेति=तथोक्ते नाक्षीणपौरुषेण युतः=युक्तः - समरे = संगरे - उचितशिक्षां=स्वानुचितदंडनं - निनाय च=चकारेत्यर्थः ॥

---

स्थानं ते दत्वा त्वत्तापापनोदं करिष्यामीति तदङ्गीकरोतु भवानिति च समुद्र- स्तम्मारुति मब्रवीत् ॥

विशे ॥ पुरा किल शैलाः पक्षैः प्रजाक्षोभं कुर्वन्त स्स्वैरं विचेरुः-तदाऽमर प्रार्थित श्शक्र स्ता न्वज्रेण पक्षेषु चिच्छेद-तदाऽयं मैनाको जलधौ स्वतनो रवन- ञ्चकार - इत्येवंकथाऽत्रानुसन्धेया - आहेत्येत त्तिङन्तप्रतिरूपक मव्ययं-उक्तञ्च- सिद्धान्तकौमुदीव्याख्यायां तत्त्वबोधिन्या मव्ययप्रकरणे - आहेति बभूवेत्यर्थे - इति - तथा च कालिदासः 'अथाह वर्णी....' इति कुमारसंभवमहाकाव्ये ॥

अथ ॥ हनुमताऽपरा सिंहिकानाम्न्यासुरी हतेति कथ्यते ॥

**तुङ्गाकृतिन्तु प्रहताङ्गीं विधाय रुचिराङ्गोऽन्तरिक्षपथगो**
**भृङ्गारसुप्रकृतश्रृङ्गारसौधततिसङ्गा न्ददर्श नगरीम् ।**
**रङ्गत्तमालसदृशाङ्गी न्दशास्यपुरभङ्गागतारिहितिदा**
**मङ्गारवल्लसदपाङ्गां जघान हि प्लवङ्गोऽपराञ्च दनुजाम् ॥**

खण्डा ॥ रुचिरांगः, तुंगाकृतिं, प्रहतांगीं, विधाय, अन्तरिक्षपथगः, भृंगारसुप्रकृतश्रृंगारसौधततिसंगां, नगरीं, ददर्श, – प्लवंगः, रंगत्तमालसदृशांगीं, दशास्यपुरभंगागतारिहितिदां, अंगारवल्लसदपांगां, अपरां, दनुजाञ्च, जघान, हि ॥

व्याख्या ॥ तुंगाकृति मिति ॥ रुचिराणि अंगानि यस्य सः, रुचिरांगः =सुंदरशरीरः,तुंगा आकृति र्यस्या स्तां, तुंगाकृतिं=उन्नताकृतिं, सुरसा मित्यर्थः प्रहतं अंगं=देहः यस्या स्तां, तथोक्तां, विधाय=कृत्वा, अन्तरिक्षपथगः= आकाशमार्गगतस्सन्, भृंगारेण = स्वर्णेन, सुप्रकृतानि = सुष्ठुनिर्मितानि, श्रृङ्गारविशिष्टानि=सुंदराणि, अथवा श्रृंगारोचितानि यानि सौधानि (अनेन रावण स्यात्यन्तकामभोगलालसत्वं द्योत्यते) तेषां संगः=संबन्धो यस्या स्ता दृशीं, नगरीं, लङ्कां, ददर्श=अपश्यत् – ततः, प्लवंगः = हनुमान्, रंगत्; तमालैः, सदृशं अंगं यस्या स्तां, तथोक्तां, दशास्यस्य=रावणस्य, पुरभंगाय= नगरीनाशनाय, आगता ये अरयः – तेषां हतिं=अघातं ददातीति=तथोक्तां-

भावः ॥ तदनु कपिश्रेष्ठ स्स हनुमा – न्कदाहं सीतां वीक्षे – इति लङ्कां दिदृक्षु रतिवेगेन गच्छन् स्वोपकारार्थ मागत म्मैनाक मुपेक्षितवान्; अत्रान्तरे दशास्यपक्षाश्रिते वातिदक्षा सुरसानाम्नी नागमाता पथि हनुमता प्रत्यक्षीचक्रे- तदनुसः ता मवरोधकारिणीं तत्रैवाब्धिमार्गे शशास ॥

विशे ॥ अक्षीणपौरुषयुत–इत्यनेनांबरतले प्रवृद्धां सुरसां निर्जित्य तस्या अ. प्रतितुंगाकृति मादा योपायेन बहिर्निरगमदिति – हनुमतोऽणिमाद्यष्टैश्वर्य- सिद्धिमत्त्वरूपं वस्तु व्यज्यते ॥

अव ॥ अशोकवनिकामध्ये सीतां ददर्श हनुमान् ; इत्युपपाद्यते ॥

वातात्मजोऽथ निशि सीतासतीं कपटदैतेयनाथनगरे
वीतासुरप्रकरभीतोऽन्वियेष गृहजातादिदेश मभितः ।
सा तस्य दृष्टिपथयाता बभूव न तु; चेतोव्यथा मनुभव
न्सोऽतीव राक्षसपरीता मपश्य दनुसीता न्त्वशोकवनिकाम् ॥

खण्डा ॥ अथ, वातात्मजः, निशि, कपटदैतेयनाथनगरे, वीतासुरप्रकरभीतः, गृहजातादिदेशं, अभितः, सीतासतीं, अन्वियेष, सा, तस्य, दृष्टिपथयाता, तु, न बभूव । सः, अतीव, चेतोव्यथां, अनुभवन्, राक्षसपरीतां, सीतां, अशोकवनिकामनु, अपश्यत् ॥

व्याख्या ॥ वात इति ॥ अथ = लङ्काप्रवेशानन्तरं, वातात्मजः = हनुमान्, निशि = निशीथे - कपट श्चासौ दैतेयनाथश्च = कपटदैतेयनाथः = मायावी रावणः-तन्नगरे = लङ्कापत्तने, वीतं, असुरप्रकरेभ्यो भीति र्यस्य सः = वीतासुरप्रकरभीतः = अपेतराक्षसभयः, गृहाणां जातं = समूहः - तदादि देशं = विविधप्रदेशं-अभितः = सर्वत्र-अभितः शब्दयोगे द्वितीया - सीतासतीं = सीतारमणीं-अन्वियेष = गवेषणाञ्चकार - सा = सीता तु - तस्य = हनुमतः-दृष्टिपथं = अक्षिमार्गं, याता = प्राप्ता - न बभूव = नासीत् - दृग्गोचरा नाभूदित्यर्थः - सः - हनुमान्, अतीव = अत्यन्तं - चेतसि - व्यथां = आर्तिं-अनुभवन्; राक्षसैः परीतां = आवृतां - सीतां - अशोकवनिकामनु = अशोकवनिकामध्ये - अपश्यत् = लुलोक ॥

अंगारवत् लसंतौ अपांगौ यस्या स्तादृशीं - अपरां = अन्यां, दनुजाञ्च = सिंहिकानाम्नीञ्च, जघानं = अहनत् ॥

भावः ॥ अथ हनुमा नाकाशेऽत्युन्नतगात्रीं तां सुरसां निहत्य समुद्रमध्य मनुराजतीं, कनकमयशृंगारसौधाभिरामां-लङ्कानाम्नीं नगरीमपश्यत् ; यदाऽय न्ददर्श लंकां तदनुपदमेव तापिञ्छसन्निभनीलगात्री रावणपुररक्षिका सिंहिकानामराक्षसी तं रुरोध - ताम प्यप्रयत्नेन निमेषमात्रेणै वावधीत् ॥

अव ॥ रावणम्प्रति सीतानिरासवाक्यं; हनुमता तच्छ्रवणादिकं श्चोपवर्ण्यते ॥

**रेवातटस्थमरुदावेल्लितप्रसवभावान्वित स्स हनुमान्**
**देवीं स्वभर्तृगतभावां निशाम्य महिजैवेति निश्चितमनाः ।**
**ताव द्दशास्यदनुजोऽवार्यभावभवभावो न्यकारि च तया**
**त्वावेजितस्वहृदयावेदनात्तपरिभाव स्तृणान्तरितया ॥**

खण्डा ॥ रेवातटस्थमरुदावेल्लितप्रसवभावान्वितः, सः, हनुमान्, स्वभर्तृगतभावां, देवीं, निशाम्य, महिजा, एव, इति, निश्चितमनाः, अभूत्, तावत्, तृणान्तरितया, तया, तु, अवार्यभावभवभावः, दशास्यदनुजः, आवेजितस्वहृदयावेदनात्तपरिभावः, न्यकारि ॥

व्याख्या ॥ रेवेति ॥ रेवायाः तटे तिष्ठतीति रेवातटस्थः - सचासौ मरुच्चेति - तथोक्तः तेन आवेल्लितं=कंपितं यत्प्रसवं-तद्व दति संशयांदोलित भावेन अन्वितः = युक्तः, सः, हनुमान्, स्वस्य भर्तरि गतः भावः यस्या स्तां-देवीं=सीतां-निशाम्य=समीक्ष्य, इयं महिजा=सीतैव - इति=इत्थं-निश्चितं मनः यस्य सः=निश्चितमनाः - अभूत् - तावत् - तदन्तरे तृणेन अन्तरितया =व्यवहितया, तया=सीतया तु-भावे भवः=भावभव.-तस्य भावः=भावभव-भावः - अवार्यः भावभवभावः - यस्य सः - अवार्यभावभवभावः = अनिवार्य कामाभिलाषः - दशास्यदनुजः = रावणासुरः - आवेजितश्च तत्स्वहृदयञ्च=

---

भावः ॥ लंकापुरनाम्नीं सिंहिकां हनुमा न्विनिर्जित्य लंकानगर्यां सीतां सर्वत्रान्विष्येष - तथापि सा तस्य दृग्गोचरा नाभूत्किल-तदनु मनोव्यथा मनुभूय शेषदेशे विचिन्वन्नशोकवनिकामध्ये राक्षससमूहान्तरितां सीतां ददर्श ॥

विशे ॥ गृहजातादिदेत - इत्यत्र - रावणान्तःपुरं सर्वं सीतायै चावलोडितं - तथा प्यदृष्टा वैदेही - तदनु - पर्यंके शयानां चारुरूपिणीं म्मन्दोदरीं अन्तैकत्र दृष्ट्वा - परिशील्य मनसि - नेयं सीता - इति व्यथा मनुभू यान्विष्य। शोकवनिकामध्ये राक्षसपरीतां सीतां लक्षयामास लक्ष्मीवानिति - चेतोव्यथा मित्यादिना व्यज्यते ॥

अथ ॥ सीतायै हनुमताऽङ्गुळीयकसमर्पण मुपवर्ण्यते ॥

निर्यापिते दनुजवर्ये वना द्विगतधैर्ये तदा स हनुम
द्वर्य स्तरो स्समवतीर्याम्बिकेति समुदी र्यात्मवेदनपरः ।
कुर्या महं दनुजवर्यप्रणाशन मथार्ये ! हि विद्ध्यनिलज
म्मार्यस्य रामनृपवर्यस्य दूत मिति चार्याङ्गुळीयक मदात् ॥

खण्डा ॥ विगतधैर्ये, दनुजवर्ये, वनात्, निर्यापिते, तदा, सः, हनुमद्वर्यः, तरोः, समवतीर्य, अंबिका, इति, समुदीर्य, आत्मवेदनपरस्सन्, आर्ये! अहं, दनुजवर्यप्रणाशनं, कुर्यां हि, अथ, मा, आर्यस्य, रामनृपवर्यस्य, दूतं, अनिलजं, विद्धि, इति, च, आर्याङ्गुळीयकं, अदात् ॥

व्याख्या ॥ निर्यापित इति ॥ विगतं धैर्यं यस्य तस्मिन्=विगतधैर्ये, दनुजेषु वर्यः=श्रेष्ठः - तस्मिन् रावणे, वनात्=अशोकवनात्-निर्यापिते सति-तदा - ततः - सः - हनुमद्वर्यः - श्रेष्ठो हनुमान्, तरोः=वृक्षात् - समवतीर्य=अवरुह्य - अंबिका=माता - इति=इत्येवं-समुदीर्य=उक्त्वा - आत्मनः वेदने =ज्ञापने, परस्सन्=आसक्तस्सन्, आर्ये ! पूज्ये ! मातः - अहं - दनुजवर्यस्य =रावणस्य, प्रणाशनं=ध्वंसंकुर्यां-करिष्ये, हि अथ, मा मां, आर्यस्य=पूज्यस्य,

---

उद्वेजितांतःकरणं - तस्य - आ - समन्तात् - वेदनात् = ज्ञापनात् - आत्तः परिभावः - अवमति र्येन सः - आवेजितस्वहृदयावेदनात्तपरिभावः - न्यकारि = धिक्कृतः ॥

भावः ॥ मया दृष्टेयं सीतावा नवेति संशयितहृदयः हनुमान् पतिं स्मरन्तीं सीतासतीं निर्वर्ण्य समीक्ष्येयं सीतैवेति निश्चितहृदयोऽभवत्-याव दित्थ मासी त्ताव द्रावणः समागत्य कामोद्वेजितः स्वभाव सीतायै चावेदयित्वा तया तृणान्तरितया लघुन्यकारि ॥

विशे ॥ 'तृण मन्तरतः कृत्वा रावणं प्रत्यभाषते'ति वाल्मीकिना चोक्तत्वा दत्रापि तृणान्तरितयेति सीताविशेषणा 'दतिसाध्वीत्वात् पतिं विनाऽन्येनसह संभाषणे - तृणान्तरिते'ति - साध्वीत्वव्यंजनम् ॥



मार्यस्य रामनृपवर्यस्य दूत मिति चार्यांगुळीयक मदात् ॥

अथ ॥ हनुमन्तंप्रति सीतावचन मुपपाद्यते ॥

**यं पावनिं कुशलसंपादकं कपिमकंपं ददर्श महिजा**
**तं पूर्वभूकथनसंपन्नमात्महृदि संपूत इत्यवगता ।**
**मां पातु मद्य बलसंपत्समेत मरिकंपावहं रघुपतिं**
**त्वं पावने! प्रहिणु लुंपन्त मार्ततितिकंप मितीत्थ मवदत् ॥**

खण्डा ॥ महिजा, कुशलसंपादकं, अकंपं, यं, कपिं, पावनिं, ददर्श, पूर्वभूकथनसंपन्नं, तं, आत्महृदि, संपूतः, इति, अवगता सती, हे! पावने! त्वं, तु, बलसंपत्समेतं, अरिकंपावहं, आर्ततितिकंपं, लुंपन्तं, रघुपतिं, अद्य, मां, पातुं, प्रहिणु, इति, इत्थं, अवदत् ॥

व्याख्या ॥ य मिति ॥ महिजा=सीता - कुशलसंपादकं=क्षेमवार्ताहरं - अकंपं=भयरहितं - यं, कपिं, पावनिं=पवनस्यापत्यं पुमान् - तं ददर्श=अपश्यत् - पूर्वं भवतीति, पूर्वभूः - प्राग्भवकथेत्यर्थः - तस्याः कथने = वचने, संपन्नं=कौशलयुक्तं, तं=आञ्जनेयं, आत्महृदि=स्वमनसि, पूत इति=नाय मसुरो मायाविरहितः पवित्र इति - अवगता सती=विज्ञातवती, हे! पावने! =अनिलज! त्वन्तु, बलसंपदा = सैन्यसंपदा, समेतं = युक्तं, अरीणां कंपं आवहतीति=अरिकंपावहं, आर्तानां ततेः, कंपं, लुम्पन्तं=नाशयन्तं, तं, रघुपतिं,=श्रीरामं, अद्य=इदानीं, मां, पातुं=रक्षितुं, प्रहिणु = प्रेषय - इतीत्थं = एवम्प्रकारेण, अवदत् = जगाद ॥

---

रामनृपवर्यस्य=श्रीरामराज पुंगवस्य, दूतं=भटं - अनिलजं - हनुमन्तं - विद्धि =जानीहि - इति च=इत्येवंब्रुवंश्च - आर्यस्य=श्रीरामचन्द्रस्य, अंगुळीयकं= ऊर्मिकां - अदात्=ददौ ॥

भावः ॥ सीतातिरस्कृतो रावणो विगतधैर्यः अशोकवनिकाया निर्गतो यदा तदा स हनुमान् मारुते स्तुदीर्य सीतायै चात्मानं निवेद्य - अंबिके! ऽहं रावणं ध्वंसं नयिष्ये हि - हनुमन्तश्च मां विद्धि - इत्युक्त्वा श्रीरामोर्मिकां सीतायै प्रादात् ॥

अव ॥ श्रीरामाय हनुमता सीतासन्देशप्रापणम् ॥

**भक्तावतंस! मयि सक्त स्स दाशरथि रुक्तप्रकारविधिना**
**नक्तञ्चरा न्मम विमुक्ति ङ्करोतु मयि रक्तेः फल न्त्वथ भवेत्।**
**उक्ते र्विभिन्नगतिभक्तौ ममासुपरिमुक्ते र्द्विमास मवधि**
**द्रा क्तञ्च प्रेषय; मदुक्तिञ्च पालय; विनोक्तिं प्रयाहि रघुजम् ॥**

खण्डा ॥ हे! भक्तावतंस! सः, दाशरथिः, मयि, सक्तः, उक्तप्रकार-विधिना, नक्तञ्चरात्, मम, विमुक्तिं, करोतु, अथ, मयि, रक्तेः, तु, फलं, भवेत्, उक्तेः, विभिन्नगतिभक्तौ, मम, असुपरिमुक्तेः – अवधिः, द्विमासं, द्राक्, तं, प्रेषय, मदुक्तिं, च, पालय, उक्तिं, विना, रघुजं, प्रयाहि ॥

व्याख्या ॥ भक्तेति ॥ हे! भक्तानां, अवतंस!=शिरोमणे! सः, दाशरथिः =रामः, मयि, सक्तः=आसक्तः चेत् - उक्तप्रकारविधिना=मयोक्तप्रकार मनुसृत्याचरणात्, नक्तञ्चरात् = राक्षसराजात्, मम - विमुक्तिं = मोक्षणं, करोतु। अथ=ततः, मयि विषये-रक्तेस्तु=अनुरागस्यतु - फलं-मत्प्राप्तिरूप मित्यर्थः - भवेत् - उक्तेः=मयोक्तस्य, विभिन्नगतिभक्तौ=भिन्नमार्गभजने, मम - असूनां परिमुक्तेः = विमोक्षणस्य - अवधिः = सीमा, द्वयो र्मासयो स्समाहारः=द्विमासं - द्राक्=द्रुतं - नि ॥ द्रा क्सद्य स्सपदि द्रुत मित्यमरः-तं =रामं, प्रेषय=प्रहिणु - मम उक्तिः=मदुक्तिः - ताञ्च - पालय=तदनुसारे णाचर। उक्तिं=अन्योक्तिं, विना - रघुजं=रामंप्रति, प्रयाहि = गच्छ ॥

भावः ॥ हे! हनुमान्! यदि श्रीरामो मदुक्तप्रकारेणेहागत्य रावणं हन्या त्तो मयि स्नेहस्य फलं मत्प्राप्तिरूपं लभ्येत - मदुक्तप्रकारा दन्यथा यदि स्या न्मासद्वया दनन्तरं ममासुविमोचनं भविष्यति - अतो ममोक्तिं पालय; प्रति-वचनं विना रामं व्रजेत्याह स्म ॥

भावः ॥ योऽयं कपिवर स्स्वस्या भर्तृकुशलवार्तां निवेदयामास; मुद्रां-गुळीयक ञ्चादा त्त मतिपूर्वं हनुमन्तं विदित्वा सीता श्रीरामचन्द्राय कुशलवार्तां प्रेषयन्ती त मवदत् - हे! कपे! रामं प्रहिणु; तेनै वाहं रक्षणीयेति ॥

अव ॥ सीतासमर्पितचूडामणि मादाय रावणसन्निधिं गन्तुं हनुमा नभिकांक्षते ।

**गोऽलक्षितां स्वधृतचेलावृता म्मणिमयालङ्कृतिन्तु मरुतो**
**बालाय संस्तुतसुशीलाय चादिश द्लोलात्मधी र्जनकजा ।**
**लीलामणि न्त मतिभीलात्मजाकृतशुभालाप माप्य विनयी**
**शीलोन्नतिं सुपद्जालै र्विवक्षु रथ पौलस्त्यदृष्टि मलषत् ॥**

---

खण्डा ॥ अलोलात्मधीः, जनकजा, गोऽलक्षितां, स्वधृतचेलावृतां, मणिमयालंकृतिं, तु, संस्तुत सुशीलाय, मरुतः, बालाय, अदिशत्, च - अथ, विनयी; लीलामणिं, अतिभीलात्मजाकृतशुभालापं, आप्य, सुपद्जालैः, शीलोन्नतिं, विवक्षुः, पौलस्त्यदृष्टिं, अलषत् ॥

व्याख्या ॥ गो इति ॥ आत्मनः धीः=आत्मधीः, अलोला आत्मधी र्यस्या स्सा-अलोलात्मधीः - जनकजा=सीता, गोभिः, = दृग्भिः, अलक्षितां = अदृष्टां, यद्वा गोभिः = किरणैः, रुचिभि रित्यर्थः - अलक्षितां=द्रष्टु मशक्यां, नि ॥ गौ र्नादित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्रीतु स्या द्दिशि भारत्यां भूमौ च सुरभावपि - नृस्त्रियो स्स्वर्गवज्राम्बुरश्मि दृग्बाणलोमसु - इति केशवः - स्वेन धृतं, यत् चेलं - तेन - आवृतां, = पिहितां, मणीनां विकारः = मणिमयः - मणिमयाच सा अलंकृतिश्चेति तां - मणिमयालंकृतिं=चूडामणिन्तु - संस्तुत-सुशीलाय = सुस्वभावाय, मरुतः=वायोः, बालाय=अर्भकाय, हनुमत इत्यर्थः- अदिशत्=ददौ - अथ - विनयी=विनय युक्तो हनुमानपि - तं - लीलामणिं = विलासार्थं धार्यमाणं चूडामणिं - अत्यन्तं भी र्यस्या स्सा - अतिभीः, सा चैला-त्मजाचेति तथोक्ता - तयाकृतं शुभ मालापञ्च - आप्य = प्राप्य-लब्ध्वेत्यर्थः-सुपद्जालैः = सुवचोभिः - शीलोन्नतिं = सौशील्यप्रकर्षं - वक्तु मिच्छुः = विवक्षुः - पौलस्त्यस्य=रावणस्य, दृष्टिं=दर्शनं, अलषत्=ऐच्छत् - लिषकांता-विति धातोर्लङि रूपम् ॥

भावः ॥ तत स्सीता हनुमतः श्रीरामचरित माद्यन्तं श्रुत्वा स्वकांत्या लक्षितु मशक्यां - स्वधृतवसनाच्छादितां शिरोमणिं तस्मै दत्वा श्रीरामंप्रति गन्तु मनुमेने-ततो हनुमानपि रावणं सुशीलमहत्त्व मुपदिदिक्षु स्त न्द्रष्टु मियेष ।

अव ॥ रावणोद्यानभंगनिमित्तेन रावण न्दिदृक्षु र्हनुमा निति कथ्यते ॥

देव्याज्ञया तदनु क्रव्यादभीतिदसुभव्याकृति स्स हनुमा
न्भाव्यर्थ मात्मनि विभा व्यागम दनुजभव्य न्दिदृक्षुधिषणः ।
नव्यं वनं सुफलदिव्यं प्रविश्य परिभाव्य प्रहस्त मसुरै
स्सेव्यस्य चाशरसुभाव्यस्य सोऽप्यथ शरव्योऽभव त्प्रतिघया ॥

---

खण्डा ॥ तदनु, क्रव्यादभीतिदसुभव्याकृतिः, सः, हनुमान्, भाव्यर्थं, आत्मनि, विभाव्य, दनुजभव्यं, दिदृक्षुधिषणः, देव्याज्ञया, अगमत्, अथ, सः, सुफलदिव्यं, नव्यं, वनं, प्रविश्य, प्रहस्तं, परिभाव्य, अपि, प्रतिघया, असुरैः, सेव्यस्य, आशरसुभाव्यस्य, शरव्यश्च, अभवत् ॥

व्याख्या ॥ देव्याज्ञयेति ॥ तदनु=ततः, क्रव्यादानां भीतिं ददातीति = क्रव्यादभीतिदा - सुष्ठुभव्या=मंगळकराच सा आकृतिश्चेति तथोक्ता - क्रव्यादभीतिदा सुभव्याकृति र्यस्य सः, तादृशः - सः, हनुमान्, भाव्यर्थं = आगामिकार्यं-आत्मनि=मनसि, नि ॥ आत्मा कलेबरे यत्ने स्वभावे परमात्मनि । चित्ते धृतौच बुद्धौच परव्यावर्तनेपि च - इत्यधरणिः - विभाव्यं = संचिन्त्य, दनुजानां भव्यं=श्रेष्ठं रावणं, दिदृक्षुः धी र्यस्य सः - तथोक्तः-देव्याः = सीतायाः आज्ञाया, अगमत् = जगाम - अथ, सः, हनुमान्, सुफलैः, दिव्यं=द्योतमानं - नव्यं=नूतनं, वनं=उद्यानवनं, प्रविश्य - प्रहस्तं, रावणोद्यानवनपालकं-परिभाव्य=तर्जनताडनादिभि रवधूय, अपि=किंच, प्रतिघया =रुषा, नि ॥ प्रतिघा रुट् क्रुधौ स्त्रिया मित्यमरः - असुरैः=दैत्यैः - सेव्यस्य =सेवां प्राप्तु मर्हस्य - सुभाव्य श्चासा वाशरश्चेति=आशरसुभाव्यः - माननीयासुरराज इत्यर्थः - यद्वा आशरैः सुष्ठु भाव्यः=उपतर्क्य इतिवा विग्रहः-तस्य इन्द्रजितः, शरव्यः=शरलक्ष्यभूतश्च - अभवत् ॥

भावः ॥ सीताज्ञाप्रकारेण हनुमा न्भाविकार्य मात्म न्यनुचिन्त्य रावणाय शुभं विवक्षुः प्रथमं रावणोद्यानं प्रविश्य तद्वनपालं प्रहस्त नामानं न्यक्कृत्य रावणप्रेरित स्येन्द्रजित श्शराणां लक्ष्योऽभवत्-इतःपरं तदेव विविच्यते पंचभिः ।

अव ॥ हनुमन्निवर्हणाय रावणोऽक्षयकुमारादी ननय दिति वर्ण्यते ॥

**वारान्निधिं कथ मतारी दयं समरशूरस्य शक्रतनय**
**स्यारे! न बन्धु? रथ कोऽरातिभृत्य ? इति वीराग्रणी दशमुखः ।**
**दूरं विविच्य हृदि श्रीरामभृत्य इति शूर स्स निश्चितमतिः**
**क्रूरां स्ततो निजकुमारां स्त मक्षयकुमारादिका नगमयत् ॥**

---

खण्डा ॥ अयं, वारां, निधिं, कथं, अतारीत् - अरे ! समरशूरस्य, शक्रतनयस्य, न, बंधुः ? अथ, कः, अरातिभृत्यः ? इति, वीराग्रणीः, दशमुखः, हृदि, दूरं, विविच्य, श्रीरामभृत्यः, इति, शूरः, सः, निश्चितमतिः, ततः, निज-कुमारान्, क्रूरान्, अक्षयकुमारादिकान् , अगमयत् ॥

व्याख्या ॥ वारामिति ॥ अयं=कपिः, वारां=उदकानां-नि ॥ 'आप स्स्त्री भूम्नि वा वारी' त्यमरः - निधिं=समुद्रमिति यावत् - कथं=केन विधा नेन, अतारीत्=ततार - अरे ! आश्चर्यद्योतकं - समरशूरस्य = युद्धे ममापि जेतुः - शक्रतनयस्य=वालिनः - न बंधुः-हितो न भवतिकिल ? अथ=तथान चेत् - कः - अरातिभृत्यः=शत्रुभटः ? इति=इत्थं - विस्मृतरामनृपपराक्रम इति भावः वीराग्रणीः=वीरश्रेष्ठः, दशमुखः = रावणः - हृदि=आत्मनि - दूरं= दीर्घं - विविच्य=संचिन्त्य - श्रीरामभृत्यः=श्रीरामराजस्य भटः - इति=शूरः; सः - रावणः - निश्चिता मति र्यस्य सः - तथोक्तस्सन् - क्रूरान्=दुष्टान् अक्षय कुमारः आदि र्येषा मसुराणां - तान् ; ततः=हनूमन्तं प्रति अगमयत्=प्रापय त्समराये - त्यर्थः ॥

भावः ॥ अरे! कथ मय क्कपि र्वाराशिं निस्तीर्यात्रागतः ? कपि रयं न वालिबन्धुः ? अथचे त्कोय म्माराते स्सेवक इति रावण स्सुदूर मनुचिन्त्य अंते श्रीरामभृत्य इति निश्चयं कृत्वा तं जेतु मक्षयकुमारादि दुष्टासुरा ननयत् ॥

विशे ॥ अत्र प्रथमं रावणः - शक्रतनय स्यारे! न बंधु? रिति संशयितवा नित्यनेन एकदा रावण स्सर्वा न्निर्जित्य वालिना सहाभियोद्धुं किष्किन्धा मगात् - तदा वाली पश्चिमाब्धौ संध्योपासनां कुर्व न्नास्ते - इत्थं विदित्वा तत्प्रदेश मगमत् - गत्वाचोपान्तास्थितं त मभियोद्धुं पृष्ठतो गत्वा त मुद्धर्तुं

अव ॥ अथाक्षयहनन मुपपाद्यते ॥

**स्या** द्वा यमस्य बलभि द्वानरोऽय मिति सोद्वेगचित्तकलिता
विद्वत्तमं सुबलभृद्वायुजं समिति विद्विष्य धीरवचसः ।
तद्वानरासुविसरोद्वासबुद्ध्यमर विद्वेषिण स्त मरथ
न्सोऽद्वेट् तदाऽक्षय मसूद्वासितं समरविद्वायुजोऽसुरयुतम् ॥

---

खण्डा ॥ अयं, वानरः, यमस्य, बलभिद्वा, स्यात्, इति, सोद्वेगचित्तकलिताः, धीरवचसः, तद्वानरासु विसरोद्वासबुद्ध्यमरविद्वेषिणः, विद्वत्तमं, तं सुबलभृद्वायुजं, समिति, विद्विष्य, अरथन्, तदा, समरवित्, सः, वायुजः, असुरयुतं, अक्षयं, असूद्वासितं यथातथा, अद्वेट् ॥

व्याख्या ॥ स्यादिति ॥ अयं, वानरः=कपिः, यमस्य = पितृपतेः - बलं भेत्तीति=बलभित् - वा - स्यात्=भूयान्नाम - इति=इत्थं - सोद्वेगेन=चित्तेन कलिताः=युक्ताः, धीराणि वचांसि येषान्ते=धीरवचसः - तद्वानरस्य असवः=तेषां विसरः=निचयः - तस्य उद्वासे बुद्धि र्येषा मपरविद्वेषिणा न्ते-तद्वानरासुविसरोद्वासबुद्ध्यमरविद्वेषिणः - हनुमदसुनिचयनिर्वापका राक्षसाः - विद्वत्तमं = विद्वच्छ्रेष्ठं - तं वायोः जातः = वायुजः - सुष्टुबलं बिभर्तीति= सुबलभृत् - सचासौ वायुजश्चेति - तथोक्तः - तं; हनुमन्त मित्यर्थः - समिति = युद्धे - नि॥ समित्याजिस्समिद्युधः - इत्यमरः - विद्विष्य=विद्वेषं कृत्वा - अरथन्=हिंसयाञ्चक्रुः तदा - समरं वेत्तीति = समरवित्=युद्धकुशलः - सः, वायुजः=हनुमान्, असुरैः, युतं=उपेतं-अक्षयं=अक्षयकुमारं - असुभिः उद्वासितं यथा तथा - अद्वेट् - दिद्वेष - अक्षयकुमारं मारयामासेति भावः ॥

भावः ॥ आगतोऽयं कपि र्यमस्यापि हन्ता स्यान्नाम - एनं यमसदनं प्रापयिष्याम इति अक्षयकुमाराद्यसुराः हनुमन्तं हिंसयांचक्रुः-अथ सोप्यनिलजः कोपात्तान् राक्षसान् हत्वाऽ क्षयकुमारं समवर्तिसन्निधि मनयत् ॥

---

मुदयुजत्, वालीतु त मविद न्नि वात्मकक्षेण शिरस्सु निष्पीड्य पराभावयत्-तदादि वाली वा तदनुयायी वा यः कोपि कपि र्दृष्टिपथे पतित स्स्या दिति रावणो भीतिमा नभू दिति कथात्रानुसन्धेया ॥

अव ॥ हत मक्षयं श्रुत्वा रावणचोदितेन्द्रजिदागमनप्रकारः ॥

धीर न्त मक्षयकुमारं हतं प्रबलशूरं निशम्य कपिना
क्रूर स्स रावणसुरारिः क्रुधा प्लवगमाराय निश्चितमनाः ।
वैरिप्रतापपरिहारोत्सुकं समरधीरं महास्त्रनिपुणं
वीराग्रय मग्रिमकुमार न्त मिन्द्रजित मारा त्कपे स्समनयत् ॥

खण्डा ॥ क्रूरः, सः, रावणसुरारिः, प्रबलशूरं, धीरं, अक्षयकुमारं, कपिना, हतं, निशम्य, क्रुधा, प्लवगमाराय, निश्चितमना स्सन्, वैरिप्रताप-परिहारोत्सुकं, समरधीरं, महास्त्रनिपुणं, वीराग्रय, अग्रिमकुमारं, तं, इन्द्रजितं, कपेः आरात्, समनयत् ॥

व्याख्या ॥ धीर मिति ॥ क्रूरः=दुष्टः-सः-रावणसुरारिः=रावणासुरः-प्रबलेषु=बलवत्सु, शूरं=अधिक पराक्रमवन्तं - धीरं=धैर्ययुक्तं - अक्षयकुमारं; कपिना=वानरेण, हतं, =मृतं-निशम्य=श्रुत्वा-क्रुधा=रोषेण, प्लवगमाराय = वानरवधाय - निश्चितमनास्सन् = दृढीकृतबुद्धिस्सन् - वैरिणां प्रतापस्य परि-हारे, उत्सुकं = उत्साहवन्तं - समरेषु धीरं - तथोक्तं - महास्त्रेषु, निपुणं = कुशलं - वीरेषु; अग्रय=प्रथमं - अग्रिमकुमारं = स्वपुत्त्रेष श्रेष्ठ - तं - सुप्रसिद्ध मित्यर्थः-इन्द्रजितं मेघनादं - कपेः = हनुमतः-अरात् = अन्तिकं-समनयत् = प्राहिणोत् ॥

भावः ॥ हनुमता युद्धे हतमक्ष मात्मपुत्त्रं चारमुखा च्छ्रुत्वा कोपाविष्ट-स्सन्-शक्रजेतारं मेघनादं बलवत्तमं मन्वानो हनुमतोऽन्तिक मनय द्रायोधनाय ॥

अथ ॥ हनुमदिन्द्रजितो र्युद्धाभिवर्णनम् ॥

मांसाशिनं स्वबलहिंसागतं रिपुवतंसं निरीक्ष्य सहसा
पुसांवरः किमिति संसक्तरु ड्लघुजिघांसु स्सदागतिसुतः ।
शंस न्स्वधर्म मभिशंस न्जगद्भयदहंसान्वयारिचरितं
ध्वंस न्नयिष्य इति हिंसाकरै स्स च रिरंसु र्बभूव विशिखैः ॥

---

खण्डा ॥ सदागतिसुतः, स्वबलहिंसागतं, मांसाशिंन, रिपुवतंसं, निरीक्ष्य, कि मयं, पुंसां - वरः, इति, सहसा, संसक्तरुट्, लघु, जिघांसुस्सन्, स्वधर्मं, शंसन्, जगद्भयदहंसान्वयारि चरितं, अभिशंसन्, ध्वंसं, नयिष्ये-इति, हिंसाकरैः, विशिखैः, तेनसह, रिरंसुर्हि ॥

व्याख्या ॥ मांसाशिन मिति ॥ सदागतेः=वायोः, सुतः=पुत्त्रः-नि ॥ मातरिश्वा सदागति - रित्यमरः, हनुमान् - स्वस्य बलस्य हिंसाय आगतं, मांसं अशनं अस्यास्तीति, मांसाशी - तं - मांसाशिनं-रिपुषु - वतंसं =श्रेष्ठं=राक्षस-श्रेष्ठमिति यावत् - निरीक्ष्य = दृष्ट्वा, अयं - राक्षसोत्तमः - पुंसां वरः किं - पुरुषपुंगवः किं? इति=इत्थं - सहसा=द्रुतं - संसक्ता रुट् यस्य सः तथोक्तः-लघु=द्रुतं - जिघांसुः=हन्तु मिच्छुस्सन् - स्वधर्मं=दौत्यकर्म, शंसन्=वदन्, जगतां भयः=जगद्भयः, तं ददातीति=जगद्भयदः - हंस-=सूर्यः अन्वये यस्य सः=हंसान्वयः=श्रीरामः - तस्य अरिः=वैरी रावणः-तस्य चरितं-तत्-रावण चरित मित्यर्थः - अभिशंसन्=गर्हयन्, ध्वंसं=नाशं, नयिष्ये=प्रापयिष्ये-इति = इत्थं - हिंसां कुर्बन्तीति हिंसाकराः = तैः विशिखैः=बाणैः, इन्द्रजिता-विक्षिप्तै रित्यर्थः - रंतु मिच्छुः = रिरंसुः - बभूव हि ॥

भावः ॥ अक्षवधानन्तर मागत मिन्द्रजित मसुरकुमारं निरीक्ष्य स हनुमा - नयं पुरुषपुंगवः कि ? मित्यविगणय्य तं दुतं जिघांसु स्स्वधर्मं वदन्-रावणचेष्टितं विनिंदन् - अये! त्वामपि हनिष्ये - इति तेनेन्द्रजिताक्षिप्तै र्बाणै रन्तु मियेष ॥

अव ॥ अथेन्द्रजिच्छद्माभिभाषण मुपपाद्यते ॥

हित्वा कपे रुरसि सत्त्वानपेतमदवत्त्वा च्छरा नसुरजो
मत्वा ह्यसाध्य इति धृत्वा च्छलं त मसुरत्वा दुवाच कृपणः ।
भो! त्वादृशोऽस्ति नहि सत्त्वेऽपरस्तु गमयित्वा वदेय मधिपं
त त्त्वं सुरारिपसखत्वं वहे रिति स तत्त्वं जगाद कपये ॥

---

खण्डा ॥ असुरजः, सत्त्वानपेतमदवत्त्वात्, कपेः, उरसि, शरान्, हित्वा, असाध्यः, इति, हि, मत्वा, असुरत्वात्, छलं, धृत्वा, कृपणस्सन्, तं, उवाच, भो! सत्त्वे, तु, त्वादृशः, अपरः, नास्ति, हि, अधिपं, गमयित्वा, वदेयं, तत्, त्वं, सुरारिपसखत्वं, वहेः, इति, सः, कपये, तत्त्वं, जगाद ॥

व्याख्या ॥ हित्वेति ॥ असुरजः=मेघनादः - सत्त्वात् अनपेत श्चासौ मदश्चेति कर्मधारयः - सत्त्वानपेतमदोऽस्यास्तीति= …मदवान्–तस्य भाव स्तस्मात् - कपेः=वानरस्य – उरसि=वक्षसि - शरान्=इषून् - हित्वा=प्रयुज्येति भावः - असाध्यः – साधयितु मशक्यः - इति - एवंहि - मत्वा, असुरत्वात् = राक्षसत्वात्-छलं=कपटं-धृत्वा=विधृत्य - कृपणस्सन्=दीनस्सन् - तं=हनुमन्तं - उवाच=अवदत् - भो! हनुमन्! सत्त्वेतु=बलेतु - त्वादृशः=भवादृशः - अपरः= अन्यः – नास्तिहि - अधिपं=रावणं - गमयित्वा=प्रापयित्वा - त्वा मिति शेषः- वदेयं=वक्ष्ये-तव बलवैशिष्ट्य मित्यर्थः, तत्=तस्मात् कारणात् - त्वं, सुरारिप सखत्वं = रावणसख्यं - वहेः = लप्स्यसे - इति=इत्थं-सः=इन्द्रजित् - कपये= हनुमते - तत्त्वं=यथार्थं - जगाद अब्रवीत् ॥

भावः ॥ तत इन्द्रजि द्धनुमदुरसि बाणप्रयोगं कृत्वा विफलस्सन् - अय मसाध्य इति मनसि विचिन्त्य कार्पण्येन - भो! हनुमन्! त्वत्तुल्यः कोपीह न विद्यते - यदि त्व मस्मत्पितु रन्तिक मागच्छे स्तेन सह ते सख्यं भविष्यति – इत्यवोचत् ॥

विशे ॥ अत्र - तृतीयोपायेन वैरिणं सिसाधयिषु रिन्द्रजि त्प्रथमं हनु- मन्तमेव कार्पण्यपूर्वक मुवाचेति – छलं धृत्वा - इत्यनेन द्योत्यते - अतोऽत्र भेदोपाय उपन्यस्तः ॥

अव ॥ हनुमद्भावितरावणदर्शनोद्देशप्रकारः ॥

धि क्तं दशानन मयुक्तं धियाऽत्यधिकरक्तं कुकर्मकरणे
भक्तो हरे र्विभुनियुक्तोऽद्य कोणपजनाक्तां पुरी मधिगतः ।
वक्ताऽस्मि भूमिजनिसक्तिं त्यजेति दृढयुक्तिप्रयुक्तवचनै
र्नक्तञ्चरेश मिति द्रा क्तत्सदः पिशितभक्तावृतं कपि रगात् ॥

खण्डा ॥ धिया, अयुक्तं, कुकर्मकरणे, अत्यधिकरक्तं, तं, दशाननं, धिक्, हरेः, भक्तः, अहं, विभुनियुक्तस्सन्, अद्य, कोणपजनाक्तां, पुरीं, अधिगतः - भूमिजनिसक्तिं, त्यज, इति, दृढयुक्तिप्रयुक्तवचनैः, नक्तञ्चरेशं, वक्ता, अस्मि - इति, कपिः, पिशितभक्तावृतं, तत्सदः, द्राक्, अगात् ॥

व्याख्या ॥ धिगिति ॥ धिया = सुबुद्ध्या - अयुक्तं = असंगतं - कुकर्मकरणे - दुष्कर्माचरणे - अत्यधिकं रक्तं = अनुरागवन्तं - तं - दशाननं = रावणं - धिक्; हरेः = विष्णववतारभूतस्य श्रीरामस्य - भक्तः, अहं - विभुनियुक्तस्सन् = स्वामिना नियोजितस्सन् - अद्य = इदानीं, - कोणपजनैः = राक्षसैः; आक्तां = संसक्तां - पुरीं = लङ्कां - अधिगतः = प्राप्तोस्मि - अतः - भूमिजनिसक्तिं = सीताया मासक्तिं - त्यज = जहि - इति - दृढं - युक्तिप्रयुक्तवचनैः = युक्तियुक्तै र्वाक्यैः - नक्तञ्चरेशं = रावणं - वक्ताऽस्मि = वक्ष्ये - इति - कपिः - हनुमान् - पिशितं - भक्तं = भोजनं - येषा न्ते पिशितभक्ताः = राक्षसाः - तै रावृतं = परिवृतं - तस्य रावणस्य सदः = सभां - प्रति - द्राक् = द्रुतं - अगात् ॥

भावः ॥ बुद्धिविहीनं - दुष्कर्माचरणसक्तं रावणं धिगिति मनसि विचिन्त्यापि - सज्जनो हनुमान् - 'रावणपुरीं बहुप्रयासेन प्राप्तोस्मि - तत्राप्यहं रामकार्यसाधनपरः - किं तेन दुष्टबुद्धिना - रे! रावण! सीतासक्तिं त्यज - इति सुदृढं युक्त मुक्त्वा नक्तञ्चरेशो दुर्मार्गात् व्यपनेयः' - इति पललाशिजनावृतसभा मगमत् ॥

विशे ॥ 'आर्जवं हि कुटिलेषु न नीति' रिति विदन्नपि वायुतनयः स्वस्य सुजनत्वात्-वैरिणा प्रयुक्तस्य भेदोपायस्य प्रतिस्पर्धित्वेन सामोपायस्य प्रयोगं वाभिमेने ॥

अव ॥ हनुमत्कृतरावणहितबोधो विशिष्यते ॥

योषाऽर्यमान्वयविभूषा तु या कपटवेषान्वितेन भवता
पाषाणतुल्यमतिदोषा दनायि नृपभूषात्मयोषि दनघा ।
सैषा तवास्वशनशेषाङ्गनेति मनु दोषाचराग्रिम! द्रुतं
रोषा दपेतहृ ददोषां समर्पय मनीषाऽस्ति ते यदि सखे ! ॥

खण्डा ॥ हे! दोषाचराग्रिम! अर्यमान्वयविभूषा, या, योषा, कपटवेषा न्वितेन, भवता, पाषाणतुल्यमतिदोषात्, अनायि, सा, एषा, अनघा, नृप भूषात्मयोषित्, तव, अस्वशनशेषांगना, इति, मनु, हे सखे! ते, मनीषा, यदि, अस्ति, रोषात्, अपेतहृत्सन्, अदोषां, तां, द्रुतं, समर्पय ॥

व्याख्या ॥ योषेति ॥ हे दोषाचराग्रिम! = निशाचरश्रेष्ठ! अर्यम्णो अन्वयस्य, विभूषा=अलंकारभूता, या, योषा=नारी सीता - कपटवेषान्वितेन = मायावेषयुतेन, भवता, पाषाणतुल्या=शिलासदृशा च सा मतिश्चेति - तथोक्ता - तस्याः, दोषात्, अनायि=आनीता; सैषा = सा सीता - अनघा = पापरहिता - नृपभूषस्य=श्रीरामचन्द्रस्य, आत्मयोषित्=निजजाया-तव - असूनां, अशने=भक्षणे, शेषांगना भुजगी इति, मनु=अवबुद्धयस्व-हे, सखे! ते = तव, मनीषा=धिषणा, यद्यस्ति=अस्तिचेत्, रोषात=कोपात् - अपेतं हृत् यस्य स तथोक्तस्सन्, अदोषां=दोषरहितां, तां-सीतासतीं, द्रुतं=शीघ्रं- समर्पय - श्रीरामायेत्यर्थः ॥

भावः ॥ हे रावण! रविकुलालंकारभूता, या, सीता, दुष्टमतिना त्वया आनीता सैषाऽतिपूता रघुवरपत्नी - तव प्राणवायुभक्षणे शेषांगना मनु- इदानीम प्यस्तिचे त्ते सुधिषणा द्रुतं तस्मै रामाय विनीत स्ता मर्पय ॥

विशे ॥ सर्पाणा माहारो वायुः - अतो ये तव प्राणादिपंचवायव स्ते सर्वे सीताभुजंगवध्वा ह्रियेरन्, इति नीत्यर्थबोधकतयोपन्यासः - वायुभक्षणधर्म साम्येन सीताया मद्यारोपणा दत्र रूपकालंकारस्य ध्वनिः - अत्र हनुमदुपदेश रूपस्य वाच्यस्य वस्तुनः विन्यसनात् वस्तुनाऽलङ्कारध्वनिः ॥

अव ॥ हनुमद्वालस्य कृशानुपरिपूर्णत्व मुपक्लृप्यते ॥

**यो राम इ त्यभिहितो रावणासुर! तवाराति रस्ति मनुज**
**स्सोऽरातिनिर्मथनशूराग्रणी रिति हृदाऽरेऽवगच्छ सुदृढम् ।**
**क्रूर स्तदाऽनिलकुमारस्य वाक्य ममरारि र्निशम्य स हरे**
**र्धीरस्य वाल मभितोऽरं कृशानुपरिवारान्वितं समकरोत् ॥**

---

खण्डा ॥ अरे! रावणासुर! यः, रामः, इति, अभिहितः, तव, अरातिः, मनुजः, अस्ति, सः, अरातिनिर्मथनशूराग्रणीः, इति, सुदृढं, अवगच्छ - तदा, सः, क्रूरः, अमरारिः, अनिलकुमारस्य, वाक्यं, निशम्य, अरं, धीरस्य, हरेः, वालं, अभितः, कृशानुपरिवारान्वितं, समकरोत् ॥

व्याख्या ॥ य इति ॥ अरे! रावणासुर! दशास्य! यः - राम इति = श्रीराम इति, अभिहितः = आख्यातः, तव, अरातिः = शत्रुः, मनुजः = मानवः - अस्ति, सः, अरातीनां = शत्रूणां, निर्मथने = ध्वंसने, शूराग्रणीः = वीराग्रेसरः, इति = इत्थं, सुदृढं, अवगच्छ = जानीहि - तदा, सः, क्रूरः = दुष्टः, अमरारिः = रावणासुरः, अनिलकुमारस्य = वायुसूनो राञ्जनेयस्य, वाक्यं = वचनं, निशम्य = श्रुत्वा, अरं = द्रुतं, धीरस्य = धैर्ययुक्तस्य, हरेः = वानरस्य, वालमभितः = पुच्छे सर्वतः - अभितः प्रयोगे द्वितीया - कृशानोः = अग्नेः, परिवारे णान्वितं = अग्निना परितो युक्तं - इत्यर्थः - समकरोत् = चकार ॥

भावः ॥ हे रावणासुर! यं रामं त्वं मनुजं मनुषे तं शत्रुभूतदैत्यवधे शूराग्रणीं विजानीहि - इति बोधयामास - तेन हनुमदुपदेशेन संजातामर्ष स्स रावणहतक स्तस्य वानरवीरस्य लांगूलेऽग्निं समर्पितवान् ॥

विशे ॥ अरातिनिर्मथनशूराग्रणी रिति विशेषणेन - एकदाऽयं तवाराति श्श्रीराम श्चतुर्दश साहस्रिकं खरदूषणसैन्य मसहायो जघान - तादृशस्य भवा न्कियानिति ध्वन्यते ॥

अव ॥ हनुमत्कृतलङ्कादाह उपश्लोक्यते ॥

नन्द न्समुज्ज्वलदमन्दाग्निना कपिवरेन्दुः पुरीञ्च परितो
मन्द ञ्चर न्दितिजबृन्दात्मनीनगृहबृन्दं विदग्धु मगमत् ।
वन्दारुराक्षसहृदान्दोलनामपि विनिन्द न्स वायुतनयो
भिन्द न्बलानि दनुजेन्दुं महाऽऽपदभिसन्दानितं समकरोत् ॥

---

खण्डा ॥ कपिवरेन्दुः, नन्दन्, समुज्ज्वलदमन्दाग्निना, पुरीं, परितः, मन्दं, चरन्, च, दितिजबृन्दात्मनीनगृहबृन्दं, विदग्धुं, अगमत् , सः, वायु-तनयः, वन्दारुराक्षसहृदान्दोलनां, अपि, विनिन्दन् बलानि, भिन्दन्, दनु-जेन्दुं, महापदभिसन्दानितं, समकरोत् ॥

व्याख्या ॥ नन्द न्निति ॥ कपिवरेन्दुः=हनुमान्; नन्दन्=तुष्यन् , सम्यक् उज्ज्वल श्चासा वमंदाग्निश्चेति तथोक्तः - तेन = अग्निना - सह - पुरीं परितः=अयोध्यापुर मभितः - मन्दं=शनैः - चरन्=संचरंश्च-दितिजबृन्दस्य - आत्मनीन-गृहबृन्दं = स्वीयावासनिचयं - विदग्धुं; अगमत्=जगाम-सः, वायुतनयः=हनुमान्; वन्दारवश्च ते राक्षसाश्च=वन्दारुराक्षसाः- तेषां, हृदां, आन्दोलनां=व्यथामपि - विनिन्दन्=अविगणय न्नित्यर्थः, बलानि=राक्षसबलानि, भिन्दन्; दनुजेन्दुं=रावणं - महापदा; अभिसन्दानितं=युक्तं समकरोत् ॥

भावः ॥ रावणदत्तवालाग्निना हनुमा न्सन्तुष्टि मधिगम्य लङ्कां समस्तां संदीप्य गृहदाह मकरोत्-तदा स दैत्या न्नमस्कुर्वतोपि ता ननादृत्य राक्षसहननं कुर्वन् रावण मापन्निमग्न मकरोत् ॥

अव ॥ लङ्कां दहतो हनुमतो मनसि चिन्ताप्रकारः ॥

**प्रत्यर्थिराक्षसजनेऽत्यन्तरोषवशतोऽत्याहित कृत महो !**
**सत्यं सुरारिपुर मेत्याद्य रामनृपकृत्यञ्च नास्मर मिति ।**
**प्रत्येत्य वायुतनयोऽत्यन्तलज्जितहृ देत्य क्षिते स्सुतनया-**
**प्रत्यक्षभद्र मधिगत्यात्मनि प्रतिनिवृत्त्यां मतिं समतनोत् ॥**

---

खण्डा ॥ प्रत्यर्थिराक्षसजने, अत्यन्तरोषवशतः, अद्य, सुरारिपुरं, एत्य, सत्यं, अत्याहितं, कृतं - अहो! रामनृपकृत्यं, च, नास्मरं, इति, प्रत्येत्य, वायु तनयः, अत्यन्तलज्जितहृत्, सन्, एत्य, क्षितेः, सुतनायप्रत्यक्षभद्रं, अधिगत्य, आत्मनि, प्रतिनिवृत्त्यां, मतिं, समतनोत् ॥

व्याख्या ॥ प्रतीति ॥ प्रत्यर्थी चासौ राक्षसजनश्चेति=प्रत्यर्थिराक्षस जनः - तस्मिन्, अत्यन्तरोषवशतः = अधिककोपवशात् - अद्य = इदानीं - सुरारिपुरं=लङ्कानगरं - एत्य=प्राप्य, सत्यं=यथार्थं - अत्याहितं=विनाशः- नि॥ विनाशेप्यत्ययः प्रोक्त इत्यमरशेषः - कृतं - अहो! अनुतापद्योतकः रामनृप कृत्यञ्च=श्रीरामकार्यञ्च - नास्मरं-इति - प्रत्येत्य=संस्मृत्य-अत्यन्तं लज्जितं हृत् यस्य सः, तथोक्तस्सन् - एत्य = पुनः अशोकवनिका माप्य - क्षितेः = भुवः, सुतनयायाः=सीतायाः-प्रत्यक्षभद्रं=प्रत्यक्षतो ज्ञेयं मंगळं - अधिगत्य=लब्ध्वा- आत्मनि=मनसि-प्रतिनिवृत्त्यां=प्रतिप्रस्थाने, मतिं=बुद्धिं-समतनोत्=चकार ॥

भावः ॥ योऽयं लङ्कापुरीदाहो हनुमताऽकारि तेन दाहेन-तत्कृतविना- शेनच मन स्यनुतप्य किं म्मया कोपेन सीताऽपि विनाशिता? अशोकवनिकाऽपि दग्धा? अस्मिन् संरंभे रामकार्यं मपि नास्मर महं, अपि सीता भद्रवती? इत्य- शोकवनिका मेत्य सीताकुशलं प्रत्यक्षीकृत्य प्रतिनिवृत्तिकामोऽभवत् ॥

अव ॥ हनुमद्वालाग्निशान्त्यर्थं सीताकृताग्निप्रस्तुतिप्रकारः ॥

**च्चोरासुरोऽय ममरारिः प्लवंगवरवीरापकार मनले**
**नारं चकार खलु; धीराः ग्निहोत्र! यदि वीरा सती ष्वह मह्रो !**
**वारीव शैत्यगुणकारी भवानिलकुमारे प्रभञ्जनसुहृत् !**
**कारुण्यदृग्भि रनुवारं प्रपश्य त मि तीरासुताऽग्नि मनमत् ॥**

---

खण्डा ॥ अयं, अमरारिः, चोरासुरः, अरं अनलेन, प्लवंगवरवीराप-कारं, चकार खलु - हे! धीर! अग्निहोत्र! अहं, सतीषु, वीरा, यदि, अनिल-कुमारे, वारि, इव, शैत्यगुणकारी, भव, हे! प्रभंजनसुहृत्, तं, कारुण्यदृग्भिः, अनुवारं, प्रपश्य, इति, इरासुता, अग्निं, अनमत् ॥

व्याख्या ॥ चोरासुर इति ॥ अयं, अमरारिः=देवशत्रुः; चोर श्चासौ असुरश्चेति तथोक्तः - चौर्येण सीता मानयामासेति कारणा च्चोरासुर इति रावणस्य विशेषणं अरं=द्रुतं अनलेन=अग्निना - (करणेन)-प्लवंगवरवीरस्य =हनुमतः, अपकारं; चकारखलु=अकरोत्किल। हे! धीर! अग्निहोत्र!=हुताशन! अहं - सतीषु साध्वीषु, वीरा यदि=उत्तमा चेत् अनिलकुमारे=हनुमति विषये, वारीव=अबिव - शैत्यगुणं=शीतलगुणं करोतीति=शैत्यगुणकारी-भव-हे! प्रभञ्जनसुहृत्=हेवायुसख! अनल! तं=वानरं - कारुण्यदृग्भिः = दयान्वितदृग्भिः अनुवारं प्रपश्य=अवलोकय - इति=इत्थं - इरासुता=भूसुता - नि ॥ इरा भू वा क्सुरा प्सु स्या - दित्यमरकोषः - अग्निं=हुताशनं-अनमत् = ननाम ॥

भावः ॥ क्रूरोऽयं रावणासुरो मारुतात्मजा याग्निनाऽपाकरोत्। हे! हुताशन! यद्यहं पतिव्रता सूत्तमास्मि - त्वं जलमिव शैत्यगुण मवलंब्य प्रशान्तो भव - हनुमति करुणाकटाक्षप्रसरण क्कुरु - इति सीता मुहुर्मुहु रग्निं ननाम ॥

विशे ॥ अत्र सीताप्रार्थने नाग्निरपि शान्तिं गमिष्यति - इत्थमेव सा स्वसाध्वीत्वप्रभावेन रावणमपि विनाशं गमयितुं शक्ता - तथापि रावण-वधलभ्यकीर्तिं श्श्रीरामाय दापयेत्युपेक्षा ञ्चकार-तेनास्याः पातिव्रत्यातिशयो व्यज्यते ॥

अव ॥ अथ हनुमतो लङ्कानिर्गमनप्रकारः ॥

**दक्षासुरालयदिधक्षारतोऽग्नि रबलाक्षीणशौर्यवचसा**
**दीक्षाढ्यकीशवररक्षा श्चकार सदयाक्ष स्ततोऽनिलसुतः ।**
**रक्षःपुरा त्प्लवगदक्षो धराजनिसमीक्षाप्रकारवचनं**
**वृक्षाटना न्प्रतिविवक्षुः पयोधि मनु नक्षत्रमार्ग मतरत् ॥**

---

खण्डा ॥ दक्षासुरालयदिधक्षारतः, अग्निः, अबलाक्षीणशौर्यवचसा, सदयाक्षस्सन्, दीक्षाढ्यकीशवररक्षां, चकार, ततः, प्लवगदक्षः, अनिलसुतः, धराजनिसमीक्षाप्रकारवचनं, वृक्षाटनान्, प्रति, विवक्षुः, रक्षःपुरात्, अनुनक्षत्र-मार्गं, पयोधिं, अतरत् ॥

व्याख्या ॥ दक्ष इति ॥ दक्ष श्चासा वसुरश्च=दक्षासुरः=रावणः-तस्य आलयं=आवासं - दग्धु मिच्छा दिधक्षा - तस्यां रतः=आसक्तः - अग्निः= हुताशनः, अबलायाः=सीतायाः, अक्षीणशौर्यवचसा=अधिकपौरुषयुतवाक्येन-दयया सहितानि=अक्षीणि यस्याग्ने स्तादृशः=सदयाक्षस्सन्; दीक्षया= रामकार्यदीक्षया - आढ्यः=दीक्षाढ्यः - स चासौ कीशवरश्चेति=दीक्षाढ्यकी-शवरः - तस्य रक्षां - चकार = अकरोत् - ततः - प्लवगदक्षः = कपिशूरः, अनिलसुतः=हनुमान् - धराजनेः=सीतायाः - समीक्षाप्रकारवचनं = अवलो कनरीतिसंबंधिवचनं - वृक्षाटनान्=शाखामृगान्प्रति - विवक्षुः=वक्तु मिच्छुः-रक्षः पुरात् = लङ्कानगरात् - अनुनक्षत्रमार्गं - नभोमार्ग मनुसृत्य - पयोधिं = समुद्रं - अतरत् ॥

भावः ॥ रावणेन प्रयत्नतोऽर्पितोऽग्निरपि सीतासाध्वीप्रार्थनाप्रभावेण तत्क्षणे प्रशान्तो बभूव - तत स्स हनुमा न्सीतादर्शनादिकवृत्तान्तं स्वानुचरा नंगदजांबवत्सुषेणादी न्प्रति विवक्षु रं गगनेऽवप्लु त्याब्धि मतारीत् ॥

विशे ॥ रावणवशंकरो प्यग्नि स्स्वभावविरुद्धां प्रशान्ति मगमदि त्यनेन साध्वीमहिम्ना स्ववशं सर्वम प्यवशं भूयादिति पातिव्रत्यमहिमाऽत्रोपवर्णितः ॥

अथ ॥ हनुमदंगदादिकपीनां चर्याऽभिवर्ण्यते ॥

**यात्वाऽब्धितीर मथ नत्वा सखी न्प्रबलसत्त्वांगदादिप्लवगान्**
**स त्वादरं प्रणुति मित्वाऽवद द्धरणिजा त्वस्ति भो इति ततः**
**ते त्वर्कजस्य वन मित्वा प्रसूनमधु पीत्वा बभंजु रगमा**
**न्गत्वा भटा स्तदनु नत्वाऽर्कज कपिशठत्व न्द्रुतं निजगदुः ॥**

खण्डा ॥ अथ, सः, अब्धितीरं, यात्वा, सखीन्, प्रबलसत्त्वांगदादि प्लवगान्, नत्वा, आदरं, प्रणुतिं, तु, इत्वा भो! धरणिजा, तु, अस्ति, इत्यवदत्- ततः, ते, तु, अर्कजस्य, वनं, इत्वा, प्रसूनमधु, पीत्वा, अगमान्, बभंजुः, तदनु, भटाः, गत्वा, अर्कजं, नत्वा, द्रुतं, कपिशठत्वं - निजगदुः ॥

व्याख्या ॥ यात्वेति ॥ अथ=अनन्तरं, सः, हनुमान्, अब्धेः, तीरं= पूर्वतटं, यात्वा = गत्वा, सखीन्, प्रबलसत्त्वाश्च ते अंगदादिप्लवगाश्चेति तथोक्ताः - तान्, जांबवदंगदादीन्, नत्वा = प्रणम्य, आदरं, प्रणुतिं=स्तोत्रं, च, इत्वा=प्राप्य, भोः (वयस्याः) इति संबोधनं - धरणिजा=सीता तु-अस्ति- लंकाया मित्यर्थः - इति = इत्थं - अवदत् = जगाद - ततः = तदनु, ते तु वानरास्तु, अर्कजस्य=सुग्रीवस्य, वनं=मधुवनं, इत्वा=प्राप्य, प्रसूनेषु, मधु = मकरन्दं - पीत्वा=निपीय, अगमान्=वृक्षान् - सर्वानपि, बभंजुः - तदनु = ततः - भटाः=वनपालकाः - गत्वा, अर्कजं = सुग्रीवं, नत्वा = प्रणम्य, द्रुतं=शीघ्रं, कपीनां - शठत्वं=गूढविप्रियकारित्वं - नितरां जगदुः=निजगदुः- स्थिते रधिक मब्रुवन् ॥

भावः ॥ स हनुमा नब्धि मुत्ती र्यात्मसखा न्प्रणम्य धरणिजा लंकाया मस्ती त्यवदत्-तत स्ते कपय स्सर्वे प्रभुकार्यसाफल्यवन्त स्तन्मुदा मधुवनंनाम सुग्रीववनं भंक्त्वा - मधु पीत्वा च स्वजात्यनुरूप माचर न्वनपालै स्सुग्रीवं गत्वा कपिशाठ्यवार्ता माश्रावयामासुः ॥

विशे ॥ काण्डान्ते काण्डनाम्नोऽन्वर्थतायै - नष्टाया स्सीतायाः प्राप्ति रूपोपवर्णना त्सुन्दर मिति - नि ॥ नष्टप्राप्ते स्तु सुन्दरमिति वचनात् ॥

अव ॥ हनुमता श्रीरामाय सीतादर्शनवृत्तान्तकथनम् ॥

तारात्मजादिकपिवारान्वित स्तदनु श्रीराम मेत्य विनयी
धीरा मपश्य मसुरारामसीम्नि सहसेरासुता मिति वदन् ।
वीर स्स मारुतकुमारः प्रमोदरसपूराभिषिक्तनृपते
र्दारावतंसमणि मारा त्समर्प्य रघुवीराभिनन्दन मगात् ॥

खण्डा ॥ तदनु, तारात्मजादिकपिवारान्वितः, विनयी, वीरः, सः, मारुतकुमारः, श्रीरामं, एत्य, असुरारामसीम्नि, धीरां, इरासुतां, सहसा, अपश्यं, इति, वदन्, प्रमोदरसपूराभिषिक्तनृपतेः, दारावतंसमणिं, आरात्, समर्प्य, रघुवीराभिनन्दनं, अगात् ॥

व्याख्या ॥ तारेति ॥ तदनु=ततः, तारात्मजः आदि येषा न्ते कपयः-तेषां वारः=समूहः-तेन अन्वितः=युक्तः - विनयी=विनयवान् - वीरः, सः, मारुतकुमारः=आञ्जनेयः-श्रीरामं=दाशरथिं-एत्य=प्राप्य-असुरस्य=रावणस्य-आरामसीम्नि=अशोकवनिकादेशे - धीरां; इरासुतां=सीतां - सहसा - द्रुतं - अपश्यं=ददर्श - इति=इत्थं, वदन्=ब्रुवन्, प्रमोदरसपूरेण=आनन्दरसप्रवाहेण अभिषिक्तस्य नृपतेः=स्नातस्य श्रीरामस्य, दाराणां अवतंसमणिं=चूडामणिं - आरात् अंतिके - समर्प्य=समर्पणं कृत्वा - रघुवीरस्य = श्रीरामचन्द्रस्य, अभिनन्दनं=प्रस्तुतिं - अगात्=अलभत-यद्वा रघुवीरेण कृतं अभिनन्दनं-अगादिति ॥

भावः ॥ तदनु हनुमां च्छ्रीराम मुपेत्य विनये नाहो! विभो! दृष्टा सीता मयेति वाचं वदन् श्रीरामचन्द्राय स्वेनानीतसीताचूडामणिं श्रीरामप्रत्यायनायादिशत् - ततः श्रीरामाभिनन्दनसौख्य मनुबभूव ॥

विशे ॥ गायत्रीमन्त्राक्षरसंख्याया मंते विद्यमानस्य हल्मात्रतकारस्य तन्मंत्रानन्तरत्वेपि कथापूरणा यायं श्लोक उपन्यस्तः - तेन ग्रंथस्य पाठकानाञ्च हनुमद्रामयो रानन्दरूपार्थस्य मंगळकरत्वेन चोपयुज्यत इत्यल मतिव्याख्यानेन।

गद्य ॥ इति श्रीमद्धयाननपादारविन्दवरिवस्याऽऽसादितोभयकवितावता; श्रीमल्लक्कोटनामक श्री शिवरामशास्त्रितनुजन्मना: श्रीसीताराम शास्त्रिणा विरचिते; तत्त्वबोधिन्याख्यव्याख्योपेते श्रीसीतारामायणे; सुन्दरकाण्डः समाप्तः

# युद्धकाण्डः

अव ॥ अथ श्रीरामादीनां लङ्काप्रस्थान मुपवर्ण्यते ॥

ओमच्युत स्स रघुरामो दशास्यवनसीमास्थितां जनकजां
रामां प्लवङ्गवरवामा न्निशम्य लघु तामनघा मानिनीषु [illegible] ।
कामं समित्करणधीमद्भि रङ्गदमुखामोघवानरभटै
र्भीमै र्युतोऽनुजललामेन चाऽपा मीशितु स्तट मर मगमत् ॥

खण्डा ॥ ओं, अच्युतः, सः, रघुरामः, दशास्यवनसीमास्थितां, रामां, जनकजां, प्लवंगवरवामात्, निशम्य, लघु, अनघां, तां, आनिनीषुः, भीमैः, कामं, समित्करणधीमद्भिः, अंगदमुखामोघवानरभटैः, अनुजललामेन, च, युतस्सन्, अपां, ईशितुः, तटं, अरं, अगमत् ॥

व्याख्या ॥ ओमिति ॥ ओं=ओङ्काररूपः, न च्यावय त्याश्रिता नित्यच्युतः, सः, रघुरामः=श्रीरामः-दशास्यस्य, वनसीम्नि=अशोकवनिकामध्ये, आस्थितां = स्थितिं गतां, रामां = मनोहरां - नि ॥ इन्दिरा रमणी रामा कोपना सैव भामिनी - इत्यमरः - जनकजां = सीतां, प्लवंगवरेषु, वामः = सुन्दरः, तस्मात्, हनुमतः, निशम्य = श्रुत्वा, लघु=सत्वरं, तां - स्वजायां, आनेतु मिच्छुः=आनिनीषुः, भीमैः=भयङ्करैः, कामं, समितः=युद्धस्य करणे, धीमद्भिः=बुद्धिमद्भिः=युद्धकर्मणि पटुभि रिति यावत् - अमोघाश्च ते वानरभटाश्च=अमोघवानरभटाः - अंगदः मुखे येषां भटानां ते=अंगदमुखामोघवानरभटाः=अंगदप्रभृति वीरवानरयोधाः, तैः, अनुजेषु, ललामः = श्रेष्ठः लक्ष्मणः, तेनच, युतस्सन्=अन्वितस्सन्, अपां=वारीणां, ईशितुः = अधिपते, लवणसमुद्रस्य, तटं=तीरं, अरं=द्रुतं - अगमत् ॥

भावः ॥ मायामानुषवेषधारी श्रीरामः हनुमत स्स्वजायावृत्तान्तं श्रुत्वा, अशोकवनिकास्थितां सीता मानिनीषु र्भीमपराक्रमै र्वानरभटै रनुजेन च सह दक्षिणोदधितीर मवाप ॥

विशे ॥ समित्करणधीमद्भि रित्यनेन लंकाधिपतिना तत्सैन्येन च साकं योद्धुं शक्ताः कपीश्वरा इति ध्वनिः ॥

अव ॥ श्रीरामकृतसमुद्रतरणविषयकच्चिन्ताप्रकारः ॥

**तत्राञ्जनेयमुखमित्रात्मजातबल मत्रस्त माहवकृतौ**
**भ्रात्राऽन्वित स्स रघुपौत्र स्समीक्ष्य निजमित्रं जगाद रविजम् ।**
**भो!ऽत्राब्धिसन्तरणपात्रं मुपाय मणुमात्रं न वेद्मि हृदि त**
**द्गोत्रारिवैरिपुरयात्रा कथ न्नु भवति स चित्रार्पितानुकृदभूत् ॥**

खण्डा ॥ तत्र, आहवकृतौ, अत्रस्तं, आंजनेयमुखमित्रात्मजातबलं, भ्रात्रा, अन्वितः, सः, रघुपौत्रः, समीक्ष्य, निजमित्रं, रविजं, जगाद, भो, अत्र, अब्धिसंतरणपात्रं, अणुमात्रं, उपायं, हृदि, न वेद्मि - तद्गोत्रारिवैरिपुरयात्रा, कथं, नु, भवेत्, इति, सः, चित्रार्पितानुकृत्, अभूत् ॥

व्याख्या ॥ तत्रेति ॥ तत्र=रामरावणयो र्भाव्ये, आहवकृतौ = युद्धकर्मणि -अत्रस्तं=भयरहितं । आंजनेयमुख=आंजनेयप्रभृति, मित्रात्मजातस्य = सुग्रीवस्य, बलं, भ्रात्रा = लक्ष्मणेन, अन्वितः=युक्तः, सः, रघुपौत्रः = श्रीरामचन्द्रः समीक्ष्य=दृष्ट्वा, निजमित्रं=आत्मसखं - रविजं=सुग्रीवं, जगाद = अब्रवीत् - भो=अये! अत्र=इह - अब्धेः संतरणे, पात्रं=योग्यं, अणुमात्रं = लेशमात्रमपि, उपायं, हृदि=अंतरंगे, न वेद्मि - तस्य, गोत्रारेः=इन्द्रस्य, वैरिणः=रिपो रावणस्य, पुरयात्रा (पुराय यात्रा)=लंकानगरीगमनं, कथं, नु, भवेत् - इति=इत्थं, सः - राघवः, चित्रे अर्पित मनुकरोतीति=चित्रार्पितानुकृत्=चित्रगतालेख्यानुकारी - अभूत्=निश्चलोऽभव दित्यर्थः ॥

भावः ॥ श्रीरामरावणयो र्भाव्यमानयुद्धा यात्रस्त मांजनेयादिवानरसैन्यं निरीक्ष्य, श्रीराम स्तेषु मुख्यम्मित्रं सुग्रीव मेव माबभाण - अयि! सखे! कथं वय मत्राब्धिं तरेम ? इत्यत्र लवम प्युपायं न जानामि - इत्थ मुक्त्वा चित्रगतालेख्यव न्निश्चलो बभूव ॥

विशे ॥ चित्रार्पितानुकृ दभू दित्यत्र धर्मलुप्तोपमालंकार स्समासगः ॥

अव ॥ सीतां समर्पयेति रावणं वदतो विभीषणस्य निरासः ॥

सोऽरातिरावणसुरारि र्निशम्य रघुवीरं युयुत्सु मुदधे
स्तीरे स्थितं त मनुवारं स्मर न्मनसि भीरु र्यदाऽऽधि मगमत् ।
कारुण्यधी स्तदनु भो! राव! णार्पय: सुदारान् हरे रिति वद
न्सोऽरं निरास्यत सुदूरं पुरो दनुजवीरो विभीषणवरः ॥

खण्डा ॥ सः, अरातिरावणसुरारिः, तं, रघुवीरं, युयुत्सुं, उदधेः, तीरे, स्थितं, निशम्य, मनसि, अनुवारं, स्मरन्, भीरुः, यदा, आधिं, अगमत्, तदनु, कारुण्यधीः, दनुजवीरः, सः, विभीषणवरः, भो! रावण! हरेः, सुदारान्, अर्पय, इति, वदन्, अरं, पुरः, सुदूरं, निरास्यत ॥

व्याख्या ॥ स इति ॥ सः=यस्सीतापहरणं कृतवा निति तच्छब्दपरामर्शः- अराति श्चासौ रावणश्चेति कर्मधारयः - अरातिः - रामस्येत्यर्थः - रावण इति सुरारिः=रामशत्रुः, रावणासुरः, तं, रघुवीरं = श्रीरामं, योद्धु मिच्छुः, तं - युयुत्सुं । उदधेः=समुद्रस्य, तीरे=तटे, स्थितं=प्राप्त मिति यावत् - निशम्य = श्रुत्वा, मनसि=हृदये, वारंवारं, अनुवारं, स्मरन्, पूर्वस्मिन् जन्मनि वैकुं- ठद्वारपालकत्वेन वा उत प्रबलशत्रुत्वेन वा स्मरणं रावणस्य युक्तमेव, भीरुः= भयशीलः, यदा, आधिं=मनोव्यथां - अगमत् ; तदनु=तदा, कारुण्यं धियि यस्य सः कारुण्यधीः=कृपालुः-दनुजानां मध्ये वीरः, सः=सुप्रसिद्धः, विभीषण वरः=विभीषणनामा रावणानुजः-भो! रावण! हरेः=भगवतो विष्ण्ववताररूपस्य श्रीरामचन्द्रस्य, शोभना च दाराश्चेति कर्मधारयः-तां, सीतां, अर्पय=समर्पणं कुरु - इति=इत्थं, वदन्=ब्रुवन्, अरं=द्रुतं - पुरः=लङ्कानगरात्, सुष्ठु दूरं = सुदूरं, निरास्यत=निर्वासितो बभूवेति कर्मणि प्रयोगः ॥

भावः ॥ रावणेन सह योद्धुम् श्रीरामः कपिभि स्सहागत इति वृत्तान्तं श्रुत्वा रावण श्श्रीरामबलं स्मारंस्मारं मनसि व्यथा मन्वभूत् - तदा भ्रातृचिन्ता मपनिनीषु र्दयालु र्विभीषणः - श्रीरामजाया मर्पयाग्रजेति वदन् शीघ्रं तेन नगरा न्निरस्तोऽभवत् ॥

अव ॥ अथ विभीषणाभयदान मुपवर्ण्यते ॥

**वित्ते दशास्यदनुजात्तावमानहृतचित्तस्य चात्मशरणा**
**यत्तस्य राक्षसगणोत्तंसभूतवरवृत्तस्य तस्य चरिते ।**
**वेत्ताऽभव च्च रिपुसत्तामिते र्दनुजवृत्तं निशम्य रघुभू**
**र्दत्ताभयेन रिपुकृत्ताय सत्समयकृ त्तेन सख्य मगमत् ॥**

---

खण्डा ॥ दशास्यदनुजात्तावमानहृतचित्तस्य, आत्मशरणायत्तस्य, च, राक्षसगणोत्तंसभूतवरवृत्तस्य, तस्य, चरिते, वित्ते सति, रघुभूः, रिपुसत्तामितेः, वेत्ता, च, अभवत् - दनुजवृत्तं, निशम्य, रिपुकृत्ताय, सत्समयकृ त्सन्, दत्ताभयेन, तेन, सख्यं, अगमत् ॥

व्याख्या ॥ वित्त इति ॥ दशास्यदनुजेन=रावणासुरेण, आत्ते नावमानेन, हृतं चित्तं यस्य तस्य, आत्मनः शरणस्य=रक्षणस्य, आयत्तस्य=अधीनस्य, राक्षसगणे उत्तंसभूतः=अवतंसायितः, वरवृत्तः=ईडितापदानश्च - तस्य; तस्य = विभीषणस्य, चरिते, वित्ते सति=विचारिते सति - नि ॥ वित्तं क्लीबे धनं वाच्यलिंगं ख्याते विचारिते-इति मेदिनी-रघुभूः=रामचन्द्रःरिपुसत्तायाः = वैरिशक्तेः - मितिः=प्रमाणं, शत्रुसामर्थ्यावगाहनं - तस्य - वेत्ता=ज्ञाता च, अभवत्=बभूव - दनुजवृत्तं = रावणचरितं, निशम्य = श्रुत्वा, रिपुकृत्ताय= वैरिच्छेदनाय - सं श्चासौ समयश्चेति सत्समयः - त त्करोतीति = सत्समयकृ त्सन्=प्रतिज्ञां कुर्वन्, दत्तं अभयं यस्मै सः दत्ताभयः, तेन विभीषणेन-सख्यं = स्नेहं, अगमत्=लेभे ॥

भावः ॥ रावणासुरे णावमतस्य निजशरणं प्राप्तस्य वरवृत्तस्य विभीषणस्य चरितं विचार्य रावणसत्तां, चर्याञ्च विदित्वा तस्मै विभीषणा याभय न्दत्वा रिपुवधाय कृतप्रतिज्ञः तेन सह मैत्री मकरोत् ॥

विशे ॥ श्लोकेऽस्मिन् स्वभावार्थ स्योपवर्णितत्वा त्स्वभावोक्ति रलङ्कारः ॥ श्लो ॥ स्वभावोक्ति रसौ चारु यथाव द्वस्तुवर्णन मिति लक्षणात् ॥

अव ॥ रामबाणभीते नाब्धिना मार्गदानं - सेतुनिर्माणपद्धति श्चोपवर्ण्यते ॥

तुष्ट न्त मात्महृदयेष्टं विभीषण मरिष्टा न्निवार्य रघुभू
र्दुष्टारिपूर्गमनदृष्टि स्स्वदर्शनप्रहृष्टं दिधक्षु रुदधिम् ।
शिष्ट न्त माश्रवणकृष्टेषुणा सुसख मिष्टं विधाय कपिभि
स्स्वेष्टायनाय परिपुष्ट न्नचीकर दभीष्टं सुसेतु मुदधेः ॥

---

खण्डा ॥ रघुभूः, आत्महृदयेष्टं, तुष्टं, तं, विभीषणं, अरिष्टात्, निवार्य, दुष्टारिपूर्गमनदृष्टिः - स्वदर्शनप्रहृष्टं, उदधिं, दिधक्षुः, आश्रवणकृष्टेषुणा, तं, शिष्टं, इष्टं, सुसखं, विधाय, स्वेष्टायनाय, परिपुष्टं, उदधेः, सुसेतुं, कपिभिः- अभीष्टं यथातथा, अचीकरत् ॥

व्याख्या ॥ तुष्ट मिति ॥ रघो र्भवतीति रघुभूः=श्रीरामः, आत्महृदयस्य, इष्टं, सखायं, तुष्टं=श्रीरामदत्ते नाभयेन तोषितं, तं, विभीषणं, अरिष्टात् = अशुभात् - रावणकृतनिर्वासजदुःखा दित्यर्थः - नि ॥ अरिष्टे तु शुभाशुभे-इत्यमरः-निवार्य, दुष्ट श्चासा वरिश्च = दुष्टारिः = रावणः - तस्य, पूः=नगरी, लङ्का-तस्यै गमने दृष्टि र्यस्य सः तथोक्तः - स्वस्य = आत्मन श्श्रीरामचन्द्रस्य, दर्शनेन, प्रकर्षेण हृष्टं=प्रहृष्टं-श्रीरामचन्द्रावलोकनेन प्रहृष्टस्य समुद्रस्य वेलातिगतरंगयुक्तत्वादिति भावः -उदधिं=समुद्रं - दग्धु मिच्छुः=दिधक्षुः - स्वमार्गावरोधभूतत्वात् - आश्रवणं=श्रवणपर्यन्तं-कृष्टः= कर्षित श्चासा विषुश्चेति समासः - तेन - आकर्णान्ताकृष्टविशिखेन, तं= उदधिं, शिष्टं=शासितं, शासु अनुशिष्ठा विति धातोः क्तान्तं - इष्टं= प्रियं, शोभन श्चासौ सखाचेति सुसखः - तं, सुसखं - राजाहस्सखिभ्य ष्टच् -विधाय=कृत्वा, स्वस्य इष्टं=स्वेष्टं - स्वेष्टञ्च तदयनञ्च = स्वेष्टायनं - तस्मै, परिपुष्टं=दृढं, उदधेः=अब्धेः-सुसेतुं=शोभनं बन्धनमिति यावत् - षिञ् भन्धने इति धातो रूपं - कपिभिः=वानरैः - अभीष्टं यथा तथा - अचीकरत्=कारयामास ॥

भावः ॥ विभीषणं रावणात्तावमानरूपाशुभनिवारणेन इष्टसखं विधाय श्रीरामो लङ्कां जिगमिषु रभवत् - स्वस्य दर्शनप्रमोदे नोद्धततरंगान्वित मुदधिं

अव ॥ श्रीरामागमनविविदिषू रक्ष स्युभे गत्वाऽवगतरामवृत्तान्ते रावणाय निवेदयामासतुः ॥

**रक्षःपुरं भुवनरक्षाकरो नलगवाक्षादिसृष्टगतिना**
**पक्षेतु लक्ष्मणसुशिक्षान्विता न्प्लवगदक्षा न्विधाय स ययौ ।**
**रक्षःप्रभु स्तदरिपक्षीयकीशबलवीक्षाशयोऽनय दुभे**
**रक्ष स्यरं प्लवगरूक्षार्दिते विभुसमक्षन्तु तेऽथ ययतुः ॥**

---

खण्डा ॥ सः, भुवनरक्षाकरः, पक्षे, लक्ष्मणसुशिक्षान्वितान्, प्लवगदक्षान्, तु, विधाय, नलगवाक्षादिसृष्टगतिना, रक्षःपुरं, ययौ - रक्षःप्रभुः - तदरिपक्षीयकीशबलवीक्षाशयः, उभे, रक्षसी, अनयत् - अथ, ते, प्लवगरूक्षार्दिते, अरं - विभुसमक्षं, ययतुः ॥

व्याख्या ॥ रक्ष इति ॥ सः, भुवनरक्षाकरः = श्रीरामचन्द्रः, पक्षे = स्वपक्षे, लक्ष्मणेन कृतसुशिक्षया, अन्वितान्=युक्तान्, प्लवगदक्षान्=वानरवीरांस्तु, प्लवगानां = श्रीरामबलानां सर्वेषां वाहिनीपति रित्यर्थः, विधाय, नलगवाक्षादिभिः सृष्टया गत्या=निर्मितमार्गेण, रक्षसां पुरं=लङ्कानगरं, ययौ= जगाम - ततः - रक्षःप्रभुः = राक्षसचक्रवर्ती रावणः - तदरिपक्षीयं=श्रीरामचन्द्ररूपवैरिपक्षस्थं च, तत्, कीशबलञ्च = वानरबलञ्चेति समासः - तस्य, वीक्षायां=अवलोकने, आशयः यस्य सः तथोक्तस्सन् - उभे रक्षसी = द्वौ राक्षसौ, अनयत्=प्राहिणोत् - अथ=ततः - ते=रक्षसी, प्लवगानां मध्ये ये रूक्षाः तैः, अर्दिते=पीडिते - अरं=द्रुतं - विभुसमक्षं=स्वराजान्तिकं, ययतुः = जग्मतुः ॥

भावः ॥ श्रीरामचन्द्र स्तदनु स्वानुजपुरस्कृतवानरभटै र्युतो लंका मविशत् - ततो लंकागतस्य श्रीरामचन्द्रस्य वाहिनीपरिमाणं जिज्ञासू रावण उभौ राक्षसौ गूढचरा वनयत् - ते रक्ष स्युभे चावगतसकलवृत्तान्ते पुनः प्रभुसन्निधिं गत्वा रावणाय निवेदयामासतुः ॥

---

दृष्ट्वा त माग्नेयबाणेन विगतगर्वं विधाय स्वेच्छया विचरितु क्कपिभि र्वारिधे र्वारिणं कारयामास ॥

अथ ॥ राक्षसकृतमायादिना भीताया स्सीताया स्सन्देहापनोदनप्रकारः ॥

वन्दारुगूढचरवृन्दा द्दशास्यदनुजेन्दु र्निशम्य समिते
सन्दानितं नृवर मान्दोळितात्महृ दमन्दच्छल स्स हि धरा ।
नन्दिन्यधीरहृदयान्दोळनाय कृतकेन्दीवरेक्षणशिर
स्स्कन्दं हठा न्नरवरेन्दो श्शुभेऽभव दसन्देहकृ द्धि सरमा ॥

---

खण्डा ॥ सः, दशास्यदनुजेन्दुः, वन्दारुगूढचरवृन्दात्, नृवरं, समिते, सन्दानितं, निशम्य, आन्दोळितात्महृत्सन्, अमन्दच्छलः, सः, धरानंदिन्यधीर हृदयान्दोळनाय, कृतकेन्दीवरेक्षणशिरस्स्कन्दं, हठात् - तदा, सरमा, नरवरेन्दोः, शुभे, असन्देहकृत् - अभवद्धि ॥

व्याख्या ॥ वन्दार्विति ॥ सः, दशास्यदनुजेन्दुः = रावणासुरः, वन्दारवश्च ते गूढचराश्च; वन्दारुगूढचराः, तेषां, बृन्दात = विततेः, नृवरं = पुरुषपुङ्गवं श्रीरामं, समिते = युद्धाय, सन्दानितं = संदितं - संसिद्ध मिति यावत् - नि ॥ बद्धे सन्दानितं मूत मुद्रितं सन्दितं सित मित्यमरः - निशम्य = श्रुत्वा, आन्दोळितं आत्महृत् यस्य सः तथोक्तस्सन्, अमन्दं = अधिकं, छलं यस्य सः = अमन्दच्छलः, अतिमायावी सन्, धरानन्दिन्याः = सीतायाः, अधीरं यद्धृदयं, तस्य - आन्दोळनाय, कृतक श्चासा विन्दीवरेक्षणश्चेति कृतकेन्दीवरेक्षणः, तस्य य च्छिरः, तस्य, स्कन्दं = पातनं, हठात् - मायारामस्य शिर श्छित्वा पातयामास - तदा, सरमा = विभीषणपत्नी, नरवरेन्दोः = श्रीरामचन्द्रस्य, शुभे = कुशले विषये, असन्देहं = संशयाभाव ङ्कुर्वतीति - असन्देहकृत्, अभवद्धि = बभूव हि ॥

भावः ॥ अथ मायावी रावण श्श्रीरामं युद्धाय सन्नद्धं अवगतश्च रक्षोभ्यां श्रुत्वा सीताहृदयान्दोळनाय मायादाशरथिं प्रकल्प्य तच्छिरश्छेदनं कृत्वा तदन्तिके पातयामास - तदा भीतायै सीतायै सरमा - श्रीरामकुशल-विषयकसन्देह म्मा कुरु; इद मासुरीकृतमायामय-मित्युक्त्वा विंशका मकरोत् ॥

अव ॥ हितं वदतो माल्यवतो निरसनं; युद्धाय रावणगमनं चोपवर्ण्यते ॥

**रे! मानवेश्वरसती मर्प यासुर! निकाम न्तवासुनिचये**
**प्रेमास्ति चे न्मनसि धीम न्निहेति गदितो माल्यवद्दितिभुवा ।**
**सामर्ष मात्मबलभूमे र्निरस्य जयकाम स्त मासुरपती**
**रामेण सङ्गर मसीमोरुसैन्यकृतधामा चिकीर्षु रभवत् ॥**

---

खण्डा ॥ रे! असुर! धीमन्! तव, असुनिचये, मनसि, निकामं, प्रेमा, अस्ति, चेत्, इह, मानवेश्वरसतीं, अर्पय, इति, माल्यवद्दितिभुवा, गदितस्सन्, जयकामः, असुरपतिः, सामर्षं यथा तथा, तं, आत्मबलभूमेः, निरस्य, असीमोरुसैन्यकृतधामा, रामेण सह, संगरं, चिकीर्षुः - अभवत् ॥

व्याख्या ॥ रे! इति ॥ रे! संबोधनार्थे प्रयोगः - असुर! रावण! धीमन्! हे! बुद्धिमन्! तव, असुनिचये=प्राणवितती, मनसि, निकामं=अत्यन्तं-प्रेमा = प्रीतिः, अस्ति चेत्; इह=इदानीमेव, मानवेश्वरस्य = श्रीरामराजस्य, सतीं=जायां, अर्पय=समर्पणं कुरु - इति=इत्थं, माल्यवन्नाम्ना, दितिभुवा = राक्षसेन, गदितस्सन्=उक्तस्सन्, जयकामः=विजयाभिलाषी, असुरपतिः = रावणः, सामर्षं=सक्रोधं यथातथा, तं, माल्यवंतं, हितोपदेशिनं, आत्मबलभूमेः=स्ववाहिनीस्थितिप्रदेशादेवेति भावः - निरस्य=निष्कास्य, असीमं च तत् उरुसैन्यंञ्चेति कर्मधारयः - तेन, कृतं, धाम=प्रभावः यस्य सः असीमोरुकृतधामा=अनन्तबलोपात्तप्रभावः - नि ॥ धाम शक्तौ प्रभावे च तेजोमंदिर जन्मसु - इति विश्वः - रामेण सह = श्रीरामचन्द्रेण सह, संगरं = समरं, चिकीर्षुः=कर्तु मिच्छु रभवत् ॥

भावः ॥ तदनु राक्षसेषु वयोवृद्धः विदितरामोदन्तः साधुः कश्चन रावण न्दृष्ट्वा, हे! सखे! रामपत्नीं सीता मर्पय - तवासुपरिरक्षणं कुर्विति हितं बोधयामास-त दसहिष्णु स्तं तिरस्कृत्य बला न्निरगमयत् - तत स्सामर्षो रामेण योद्धु मनन्तसैन्यै स्सन्नद्धो बभूव ॥

अव ॥ इन्द्रजित्कृतनागास्त्रप्रयोगप्रकारः ॥

**नीलाङ्गदादिकपिजालै र्मृधे रिपुजनालिप्रशंसितबलः**
**पौलस्त्यसूनु रगशैलाहतं स्वदनुजालिं निरीक्ष्य गगनात् ।**
**लीलाकृतिः कपटशीलायुधैः प्लवगकोलाहलं रघुवरौ**
**नीलाहिविद्धतनुराळी चकार बहु थेलात्मजाव्यसनदः ॥**

---

खण्डा ॥ मृधे, रिपुजनालिप्रशंसितबलः - पौलस्त्यसूनुः, नीलांगदादिकपिजालैः, अगशैलाहतं, स्वदनुजालिं, निरीक्ष्य, गगनात्, लीलाकृतिः, कपटशीलायुधैः - प्लवगकोलाहलं यथातथा, बहुधा, इलात्मजाव्यसनद स्सन्, रघुवरौ, नीलाहिविद्धतनुराळी, चकार ॥

व्याख्या ॥ नील इति ॥ मृधे=युद्धे, रिपुजनाल्या प्रशंसितं बलं यस्य सः तथोक्तः - पौलस्त्यसूनुः = रावणपुत्रः - शक्रजित् - नीलश्च, अंगदश्च आदि र्येषां जालानां = तै र्वानरजालैः - अगाश्च = वृक्षाश्च, शैलाश्च = पर्वताश्च, तैः, आहतं=ताडितं - स्वदनुजालिं=आत्मीयराक्षससमूहं-निरीक्ष्य = दृष्ट्वा, गगनात्=आकाशात्, गगने निलीयेत्यर्थः - ल्यब्लोपे कर्म ण्यधिकरणे च (वा) इति पंचमी - लीलाकृतिः=विलासा र्कृतमायाकृतिः - कपटशीलानि च तानि आयुधानीति कर्मधारयः - तैः, नागास्त्ररूपै रिति भावः - प्लवगानां कोलाहलं यथा तथा, बहुधा - इलात्मजायाः=सीताया व्यसनदस्सन् = दुःखं कुर्वन्, रघुवरौ = रामलक्ष्मणौ, नीलाहिभिः विद्धा, तनुराळी ययो स्तौ नीलाहिविद्धतनुराळी - चकार = अकरोत् - नागास्त्रेण रामलक्ष्मणा विन्द्रजिताऽऽहता विति भावः ॥

भावः ॥ अथ कपियोधयूथैः प्रशंसितबल इन्द्रजि त्समरे वानरबलाहतं दनुजबलं निरीक्ष्य सत्वरं गगने विलीनो नभसः मायाकृतिना रामलक्ष्मणौ नागास्त्रे णाविध्यत् - तदनु कपीश्वराः कोलाहल ञ्चक्रुः - सीता च तद्वार्तां निशम्य व्यथा माप ॥

विशे ॥ अत्रेन्द्रजि त्प्रत्यक्षयुद्धेऽसमर्थो गगने विलीन इति प्रकारान्तराश्रयणोक्तेः रामबलसारं-इन्द्रजिन्मृते रनतिदूरत्वञ्च-इति वस्तुद्वयस्य व्यंग्यत्वम् ॥

अव ॥ रावणकृतसमरप्रवेशपद्धतिः ॥

**य न्तातमोदक्कु दुदन्तं सुरेन्द्रजि दनन्तात्मसत्त्व मवद**
**त्त न्त न्निशम्य रिपुशान्ति ङ्करिष्य इति गन्तुं स याव द्करो त् ।**
**स्वान्तं; कृताहिनिचयान्तौ तदाऽऽसतु रनन्तौजसाऽहिरिपुणा**
**त्वन्तानुकृ त्तदमरान्ताधिपो युध मशान्तः क्रुधाऽविश दरम् ॥**

---

खण्डा ॥ तातमोदकृत्, सुरेन्द्रजित्, यं, उदन्तं, अनन्तात्मसत्त्वञ्च, अवदत्, तः तं, निशम्य, रिपुशान्तिं, करिष्ये, इति, यावत्, सः, गन्तुं, स्वान्तं, अकरोत्, तदा, अनन्तौजसा, अहिरिपुणा, कृताहिनिचयान्तौ, आसतुः, अमरान्ताधिपस्तु, अशान्तः, अन्तानुकृत्सन्, युधं, क्रुधा, अरं, अविशत् ॥

व्याख्या ॥ य मिति ॥ तातस्य = जनकस्य, नि ॥ तातस्तु जनकः पिते त्यमरः - मोदङ्करोतीति, तातमोदकृत् =रावणसन्तोषकारी, सुरेन्द्रजित् = इन्द्रजिन्नामा पुत्रः - यं - रामलक्ष्मणयो र्नागास्त्रबद्धत्वरूपं, यच्छब्दपरामर्शः- उदन्तं=वृत्तान्तं - अनन्तश्च तदात्मसत्त्वञ्चेति कर्मधारयः - तच्च - अवदत्- तं, तच्च, वृत्तान्त मात्मसत्त्वञ्च, निशम्य = श्रुत्वा, रिपुशान्तिं = शत्रुनाशं, करिष्ये - इति=एवं निश्चित्येति शेषः - यावत् - सः = रावणः - गन्तुं = युद्धभूमि माप्तुं - स्वान्तं=हृदयं, अकरोत् - तदा, अनन्तं ओजः यस्य सः= अनन्तौजाः - तेन - अहिरिपुणा = गरुत्मता (करणेन) गारुडास्त्रप्रयोगेनेति भावः - कृतः अहिनिचयान्तः याभ्या न्तौ तथोक्तौ, आसतुः - अमराणां अन्ताः=अमरान्ताः=राक्षसाः - तेषा मधिपस्तु=रावणस्तु, अशान्तः=कोपाविष्टः - अन्तं=यमं - अनुकरोती त्यन्तानुकृत् - पितृपति मनुकुर्वन्, युधं = समरतलं - क्रुधा=रुषा, अरं=द्रुतं, अविशत् ॥

भावः ॥ रामलक्ष्मणा विन्द्रजि त्संमूर्च्छ्य तदुदन्तं, स्वात्मबलञ्च पित्रे व्यश्रावयत् - तञ्च वृत्तान्तं निश म्यासुरनाथोऽपि युद्धे रामलक्ष्मणौ सुलभं जय्याविति निश्चित्य गंतुं याव दभिललाष तावदेव राघवावपि नागास्त्रप्रयोग प्रतिक्रियारूपगारुडास्त्रप्रयोगे णागतेन गरुत्मता नागपाशविमोचिता वभवतां- त दाश्राव्य रावणो द्विगुणीकृतक्रोधे नायोधनभूमि मविशत् ॥

अव ॥ श्रीरामकृतावमान मसहिष्णो रावणस्य युद्धभूमेः पलायनम् ॥

भारो भुवो दनुजवाराधिप स्स रघुवीरा वुपेत्य समरे
धीरन्तु लक्ष्मणकुमारं यदाऽरथ दसारोऽपत द्भुवि तदा ।
शूर स्ततोऽग्रजनिवीरो बला द्दनुजवीरं प्रहृत्य विशिखै
र्दूरं व्यपानय दपारापदा निलय मारासुभि र्दशमुखः ॥

---

खण्डा ॥ भुवः, भारः, सः, दनुजवाराधिपः, समरे, रघुवीरौ, उपेत्य, यदा, धीरं, लक्ष्मणकुमारं, तु, अरथत्, असारः, तदा, भुवि, अपतत् - ततः, शूरः, अग्रजनिवीरः, विशिखैः, दनुजवीरं, प्रहृत्य, दूरं, व्यपानयत् - दशमुखः-च, अपारापदा, असुभिः, निलयं, आर ॥

व्याख्या ॥ भार इति ॥ भुवः=भूमेः, भारः=भारभूतः, सः, दनुजवाराधिपः=रावणः - समरे=युद्धे, रघुवीरौ = रामलक्ष्मणौ, उपेत्य = संगत्य, यदा-धीरं=धैर्यवन्तं, लक्ष्मणकुमारन्तु, अरथत्=अहत् - रथ हिंसासंराध्योः-लङ्रूपं - असारः=बलविहीनस्सन्, तदा, भुवि=भूमौ, अपतत् = लक्ष्मणः पपात - ततः=तदनु, शूरः=पराक्रमवान्, अग्रजनिवीरः=श्रीरामः, विशिखैः = इषुभिः - दनुजवीरं = रावणं, प्रहृत्य - दूरं, व्यपानयत् - दशमुखश्च = रावणश्च, अपारा चासा वाप च्च=अपारापत् - तया, संगमित इति शेषः-असुभिः=प्राणैः - कथञ्चि त्प्राणा न्संरक्ष्येत्यर्थः - निलयं = गृहं - आर = जगाम - ऋ गताविति धातो र्लिट् ॥

भावः ॥ भुवनभारभूतो दशानन स्समरे राघवा वुपेत्य लक्ष्मणकुमारं रंगे विशिखै र्यदाऽपातय त्तदा श्रीरामोऽपि तं बाणै र्निपीड्य दूरं पलायित मकरोत् - तदा प्राणावशिष्टो रावण स्स्वावासं जगाम ॥

अव ॥ रावणप्रेरितस्य कुंभकर्णस्य युद्धे मृतिः ॥

**रे!** कुंभकर्ण! रघुपाका व याधिकसमीकाय रामविभुने
त्याकण्ठरुड् दनुजलोकाधिपोऽनय दनीकै र्यदाऽनुज मरिम् ।
साकेतराजबल मेको रराथ कपिलोकान्तक स्सहि तदा
काकारिचापगळितैकेषुणा शमनलोकस्य चातिथि रभूत् ॥

---

खण्डा ॥ रे! कुंभकर्ण! रामविभुना, अधिकसमीकाय, रघुपाकौ, अय, इति, आकण्ठरुट्, दनुजलोकाधिपः - यदा, अनुजं, अनीकैस्सह, अरिं-अनयत्-तदा, सः, एकः, कपिलोकान्तकस्सन्, साकेत राजबलं - रराथ - काकारिचापगळितैकेषुणा, शमनलोकस्य, अतिथिश्च, अभूद्धि ॥

व्याख्या ॥ रे इति ॥ रे! कुम्भकर्ण! रामविभुना=श्रीरामेण - अधिकं समीकाय=प्रबलायोधनाय-रघुपाकौ=राघवौ, द्वितीया, अय; इति=इत्थं-अकण्ठं रुट् यस्य सः=आकण्ठरुट् - दनुजलोकाधिपः = रावणः - यदा - अनुजं = भ्रातरं, कुम्भकर्णं, अनीकैः=सैन्यै स्सह, अरिं=शत्रुम्प्रति-अनयत्=प्राहिणोत्-नीञः द्विकर्मकत्वा त्प्रयोगः - तदा, सः, एकः = कुंभकर्णः, असहायस्स न्नित्यर्थः - कपिलोकानां=वानरजनानां - नि ॥ लोकस्तु भुवने जने-इत्यमरः-अन्तकस्सन्=विनाशकस्सन् - साकेतराजस्य=श्रीरामस्य, बलं=सैन्यं - नि ॥ बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः बलो हलायुधे दैत्यभेदे बलिनि वायसे - इति विश्वः - रराथ=हिंसयामास - रथ हिंसासंराध्यो रिति दिवादि-धातुः - काकारे श्चापः - तस्मा द्गळित श्चासा वेकेषुश्चेति विग्रहः - तेन-श्रीरामकोदंडा द्गळितेन बाणे नैकेनैव - शमनलोकस्य=यमलोकस्य-अतिथिश्च-अभूद्धि ॥

भावः ॥ तदनु रावण श्श्रीरामे णाहतः पलाय्य - स्वानुजम्प्रति - रे! कुंभकर्ण! गच्छ, रामेण युद्धं कुरु - इत्यमितरोषा द्यदा तं प्रेरयामास तदा स रणभूमिं ङ्गत्वा वानरा नसहाय एवाहन् - तत श्श्रीरामोऽपि-आकर्णान्ताकृष्टे नामोघे नैकेन बाणेन तं यमलोक मनयत् ॥

अव ॥ श्रीरामलक्ष्मणयो रिन्द्रजित्कृतपातनप्रकारः ॥

गोपाय राघवकृतापायवीतसमरोपायवद्दितिभुवा
 ङ्कोपा त्सुरेन्द्रजि दवा पाजि मुज्ज्वलशरोपाहितोत्तमधनुः ।
 भूपात्मजावपि यदाऽपारशातशरचापौ निजघ्नतु रमुं
 तापा त्तदेन्द्रजि दपापौ प्रमूर्च्छ्य भुवि चापातय द्रघुवरौ ॥

---

खण्डा ॥ सुरेन्द्रजित् - राघवकृतापायवीतसमरोपायवद्दितिभुवां, गोपाय, उज्ज्वलशरोपाहितोत्तमधनुस्सन्, कोपात्, आजिं - अवाप, अपारशात शरचापौ, भूपात्मजौ, अपि, यदा, अमुं, निजघ्नतुः, तदा, इन्द्रजिच्च, तापात्, अपापौ, रघुभूपौ, प्रमूर्च्छ्य, भुवि, अपातयत् ॥

व्याख्या ॥ गोपायेति ॥ सुरेन्द्रजित् = मेघनादः, राघवाभ्यां कृतः अपायः येषा न्ते तथोक्ताः - वीताः समरविषयकाः उपाया एषां सन्तीति तथोक्ताश्च ये दितिभुवः=राक्षसाः, तेषां गोपाय=रक्षणाय - उज्ज्वलैः शरैः उपाहितं=संयोजितं, उत्तमं धनु र्यस्य सः तथोक्तस्सन्, कोपात्, आजिं = समरं, अवाप=प्राप्तवान् - अपारशातशराः चापैच ययो स्तौ, भूपात्मजौ = रामलक्ष्मणावपि, यदा, अमुं=इन्द्रजितं, निजघ्नतुः=अहतां, तदा, इन्द्रजिच्च, तापात् = उद्वेगात् - अपापौ - पापं=क्रूरस्वभावः नास्ति ययो स्तथोक्तौ रघुभूपौ=राघवौ - प्रमूर्च्छ्य=मूर्छयित्वा, भुवि - अपातयत् ॥

भावः ॥ श्रीरामलक्ष्मणकृताहवे समरसमर्थनोपायानभिज्ञदैतेयानां रक्षणार्थं मिन्द्रजि त्समरतल मुग्रोऽवतीर्णः, त मिम म्मेघनाद मनुपदमेव रामलक्ष्मणौ जघ्नतुः-तेन तापेन सोऽपीन्द्रजि द्रामलक्ष्मणौ प्रमूर्च्छ्य भूमा वपातयत् ॥

अथ ॥ संजीविनीनगाहरणप्रकारः ॥

देवा वुपेत्य दनुजाविद्धरम्यतनुभा वार्तिदूषिततनू
तावद्विलेपु रभिधावद्धियोऽपगतभावाः प्लवङ्गपतयः ।
सेवां विधाय बहुधा ऽऽवेजित स्तदुपजीवौषधान्वितगिरिं
प्रावेष्ट्य वालवृतिनाऽवार्यशौर्यदृढभावा न्निनाय हनुमान् ॥

---

खण्डा ॥ तावत्, अभिधावद्धियः, अपगतभावाः, प्लवंगपतयः, दनुजाविद्धरम्यतनुभौ, आर्तिदूषिततनू, देवौ, उपेत्य, विलेपुः - अवार्यशौर्यदृढभावान्, हनुमान्, सेवां, विधाय, बहुथा, आवेजितः, तदुपजीवौषधान्वितगिरिं, वालवृतिना, प्रावेष्टय, निनाय ॥

व्याख्या ॥ देवा विति ॥ तावत् = याव दुभौ राघवा वाजिस्थले मुमुहतु स्तावदिति पूर्वपरामर्शः - अभितो धावन्ती धी र्येषा ङ्कपीना न्ते; अभिधावद्धियः = संभ्रान्ताः - अपगतः भावः येषा न्तेऽपगतभावाः; प्लवङ्गपतयः = कपीश्वराः, दनुजेन आविद्धा तनुभा ययो स्तौ तथोक्तौ - इन्द्रजिद्धतिनाऽपेततनुरुची इत्यर्थः - नि ॥ स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तय इत्यमरः - आर्त्या दूषिता तनु र्ययो स्ताविति, देवौ = रामलक्ष्मणौ - द्वितीया - उपेत्य = अन्तिक ङ्गत्वा, विलेपुः = रुरुदुः - अवार्यञ्च त च्छौर्यं श्चावार्यशौर्यं - तेन, दृढः = परिपुष्टः भावः तस्मात् अवार्यशौर्यदृढभावान्, हनुमान्, सेवां = सपर्यां, विधाय = कृत्वा, बहुथा = अनेकथा, आवेजितः = उद्विग्नान्तरंगस्सन्, तयोः उपजीवश्च त पौषधञ्चेति विग्रहः - तेन अन्वितः यो गिरि स्तं - संजीवौषधान्वित मद्रिं । वालवृतिना = वालस्य वृतिना = वलयेन, प्रावेष्टय, निनाय ॥

भावः ॥ यदा राघवौ रणांगणे मुमुहतु स्तदा कपय स्सर्वे ता वुपेत्या विलाप श्चक्रुः - तदनु तयोः परिचर्यां कृत्वाऽतिभक्तो हनुमा नावेजितान्तःकरणः संजीवौषधाद्रिं वाले नावेष्टयानिनाय ॥

अथ ॥ संजीविन्युपजीवितरामलक्ष्मणयो रिन्द्रजिता सहाऽयोधनप्रकारः ॥

**वारे तदोषधिसमीरोपजीवितसुधीराग्रजानुजवरौ**
**शूरा वुभा वसुरवारा न्निशातशरधाराबलिं व्यतनुताम् ।**
**सोऽरं सुरेन्द्रजि दथारिप्रहारपरिहाराय खे तु विचर**
**न्धीरो हि सङ्गर मभीरु श्चकार नृपवीरै स्सहाधिकरुषा ॥**

---

खण्डा ॥ वारे, तदोषधिसमीरोपजीवितसुधीराग्रजानुजवरौ, शूरौ, उभौ, असुरवारान्, निशातशरधाराबलिं, व्यतनुतां, अथ, सः, सुरेन्द्रजित्, अरं, अरिप्रहारपरिहाराय, खे, तु, विचरन्, धीरः - अभीरुश्च सन्, नृपवीरैः, सह, अधिकरुषा, सङ्गरं, चकार ॥

व्याख्या ॥ वार इति ॥ वारे=अवसरे - नि ॥ वारस्सूर्यादिवासरे, द्वारे हरे कुब्जवृक्षे वृन्दावसरयोः क्षणे - इति मेदिनी-तदोषधिना=तत्संजीवनौषधेः य स्समीरः - तेन, उपजीवितौ सुवीरौ च ता वग्रजानुजौ चेति कर्मधारयः-शूरौ = शौर्यवन्तौ - उभौ = द्वावपि रामलक्ष्मणौ, असुरवारान् = राक्षसबृन्दान्, निशाताश्च ते शराश्च=निशातशराः - तेषां धाराः=कोटयः - तासां बलिं= उपहारं - नि ॥ करोपहारयोः पुंसि बलि रित्यमरः - विशेषेण - अतनुतां = चक्रतुः - अथ=ततः, सः, सुरेन्द्रजित्=मेघनादः - अरं=द्रुतं - अरिप्रहार- परिहाराय=शत्रुकृतप्रहरणनिरसनाय - खे तु=गगने तु, विचरन् = संचरन्, धीरः=धैर्ययुक्तः - अभीरुश्च = भयरहितस्सन्, नृपवीरैः = नृपौ च वीराश्च (वानरवीराः) इति द्वन्द्वः - नृपस्य=रामस्य, वीराः इतिवा, तै स्सह, अधिक- रुषा=अमितकोपेन, संगरं=आयोधनं - चकार ॥

भावः ॥ हनुमदानीतसंजीवनौषधिनगाहरणावसरे तदोषध्योपजीवितौ रामलक्ष्मणौ राक्षसबृन्दं सर्वं शरधारायै बलिं चक्रतुः - इन्द्रजिदपि सत्वरं शत्रुप्रहाररक्षणाव्यग्रः खे विचरन् अभीरू रामेण तद्बलेनच सह संगर मकरोत् ॥

अथ ॥ इन्द्रजिद्युद्धपद्धतिः ॥

स्या द्वा सुरेन्द्रबलभि द्वीरदानवबलोद्वाहकोऽय मिति ता
वुद्वेजितौ दितिजनूद्वासनं समितिविद्वेषिणा वकुरुताम् ।
सोद्वेग मिन्द्रजिदनुद्वेजितस्वबलभिद्वानरा नधियुधं
प्रोद्वीक्ष्य शत्रुशिरभि द्वीरजात मपिध द्वीर्यवद्घनशरैः ॥

---

खण्डा ॥ अयं, वीरदानवबलोद्वाहकः, सुरेन्द्रबलभिद्वा, स्यात् - इति, तौ, उद्वेजितौ, विद्वेषिणौ, समिति - दितिजनूद्वासनं, अकुरुतां, शत्रुशिरभित्, इन्द्रजिच्च, सोद्वेगं यथा तथा, अनुद्वेजितस्वबलभिद्वानरान्, अधियुधं, प्रोद्वीक्ष्य, वीर्यवद्घनशरैः, वीरजातं - अपिधत् ॥

व्याख्या ॥ स्या दिति ॥ अयं=गगनस्थ इति यावत्-वीरदानवबलस्य, उद्वाहकः=सेनानीः, सुरेन्द्रस्य बलं भेत्तीति=सुरेन्द्रबलभिद्वा = इन्द्रजिद्वा, स्यात्=भूयात् - इति=इत्थं, विचिन्त्य, तौ=राघवौ, उद्वेजितौ, विद्वेषिणौच सन्तौ, राक्षसेषु विषये इत्यर्थः - समिति=युद्धे, दितिजनूनां=दैत्यानां - नि ॥ जनु र्जननजन्मानि जनि रुत्पत्ति रुद्भव इत्यमरः - उद्वासनं=लोकतो निरासनं, अकुरुतां - शत्रूणां शिराः=तान् भिनत्तीति - शत्रुशिरभित् - नि ॥ शिरोऽदन्त श्शिरोवाचीति चामरः - इन्द्रजिच्च=मेघनादोऽपि, सोद्वेगं यथा तथा-ससंभ्रम मित्यर्थः - अनुद्वेजितश्च त त्स्वबलञ्चेति - अनुद्वेजितस्वबलं - तत् भिन्दन्तीति; अनुद्वेजितस्वबलभिदः, अनुद्वेजितस्वबलभिदश्च ते वानराश्चेति तथोक्तान्, अधियुधं - युद्धे - प्रोद्वीक्ष्य=सम्यग्दृष्ट्वा, वीर्यवन्तश्च, घनाश्च ते शराश्चेति कर्मधारयः = अमोघबाणैः, वीरजातं = वीरवानरबलसमूहं - अपिधत् = आच्छादितवान् ॥

भावः ॥ अथ रामलक्ष्मणौ गगने विलीय युद्धं कुर्वन्त मिन्द्रजितं विज्ञाय - सम्मुखस्थराक्षसबलोद्वासनं चक्रतुः-तत इन्द्रजिच्च स्वबलं सोत्साहं यथा भवति तथा वानरबलं वीर्यवच्छरै राच्छादितवान् ॥

---

पाठान्तरः - प्रोद्वीक्ष्य शत्रुशिरभि द्वारिता न्समकरो द्वीर्यवद्घनशरैः ॥

अथ ॥ हनुमता प्रोत्साहितेन लक्ष्मणे नेन्द्रजिन्मरणम् ॥

धीर स्तदाऽऽशुगकुमार स्त मिन्द्रजित मारा न्निरीक्ष्य समरे
शूरञ्च लक्ष्मण मथारोप्य बाहुयुजि तारेयमुख्यकपिभिः ।
क्रूरं निशातशरधाराहतं दनुजवारं नृपानुजनिना
पौरन्दरास्त्रकृतमार न्त्वकारय दुदार न्त मिन्द्रजयिनम् ॥

---

खण्डा ॥ तदा, धीरः, आशुगकुमारः, तं, इन्द्रजितं, समरे, आरात्, निरीक्ष्य, अथ, शूरं, लक्ष्मणञ्च, बाहुयुजि, आरोप्य, तारेयमुख्यकपिभिस्सह - नृपानुजनिना, क्रूरं, दनुजवारं, निशातशरधाराहतं - उदारं, तं, इन्द्रजयिनं - पौरन्दरास्त्रकृतमारं, तु, अकारयत् ॥

व्याख्या ॥ धीर इति ॥ तदा=ततः, धीरः=धैर्यवान्, आशुगकुमारः = वायुतनयो हनुमान् - तं - इन्द्रजितं=मेघनादं, समरे=युद्धे, आरात् = दूरात्, निरीक्ष्य=दृष्ट्वा, अथ=ततः, शूरं=शौर्ययुक्तं - लक्ष्यणञ्च=सौमित्रिं, बाहुयुजि=दोर्युगे, आरोप्य, तारेयमुख्यकपिभिः=अंगदप्रभृतिवानरै स्सहितेन, नृपानुजनिना=लक्ष्मणेन, क्रूरं=नृशंसं, दनुजवारं=राक्षसबृन्दं - निशातशर-धाराभि राहतं=ताडितं; उदारं; तं - इन्द्रजयिनं=मेघनादं - पौरन्दरास्त्रेण = ऐन्द्रास्त्रेण, कृतः मारः यस्य तं - पौरन्दरास्त्रकृतमारन्तु - अकारयत् = कारयामास ॥

भावः ॥ युद्धे मायया कपिवीरान् राघवौ च निजघ्निवांस मिन्द्रजयिन न्दूरादेव हनुमा न्निरीक्ष्य स्वबाहुयुगे सौमित्रि मारोप्य - तेन दनुजबृन्दं - शरै रघातयत् - तत इन्द्रजितं मृत ञ्च कारयामास ॥

अव ॥ अथ रामरावणायोधनप्रकारः ॥

**मन्दायमानबलबृन्देरिता द्विगतनन्द स्तनूजमरणा**
**न्निन्द न्विधिं रघुकुलेन्दुप्रताप मभिनन्द न्दशास्यदनुजः ।**
**मन्दोदरीप्रहितसन्देशवा ग्विजयसन्देहलेशरहितोऽ**
**मन्दात्तरुट् स तु मुकुन्देन योद्धु मरिबृन्दे विवेश सरथः ॥**

खण्डा ॥ मन्दायमानबलबृन्देरितात्, तनूजमरणात्, विगतनन्दः, दशास्यदनुजेन्दुः, विधिं, निन्दन्, रघुकुलेन्दुप्रतापं, अभिनन्दन्, मन्दोदरी प्रहितसन्देशवाक्, अपि, विजयसन्देहलेशरहितः, अमन्दात्तरुट्, सः, तु, मुकुन्देन सह, योद्धुं, सरथः, अरिबृन्दे, विवेश ॥

व्याख्या ॥ मन्दायमान इति ॥ मंदायमानं त द्बलञ्च-मन्दायमानबलं, तस्य बृन्देन, ईरितात्=वचनात्, तनूजस्य=पुत्र स्येन्द्रजितः, मरणात् = मृतेः, विगतः नन्दः यस्य सः - विगतनन्दः - दशास्यदनुजेन्दुः=रावणासुरः- विधिं = स्वस्यादृष्टं, निन्दन्, रघुकुलेन्दुप्रतापं = श्रीरामचन्द्रस्य पराक्रमं - अभिनन्दन्=प्रशंसन्, मन्दोदर्या प्रहिता या सन्देशवाक्=रामेणायोधनं मरणाय कल्पयिष्यतीति वाक्, यस्य सः तथोक्तः - तथाऽपि, विजये विषये - सन्देह लेशेनाऽपि, रहितः=शून्यः, अतिमन्दं=अधिकं, आत्ता रुट् यस्य स तथोक्तः- स तु=रावणस्तु - मुकुन्देन सह=श्रीरामेण सह - योद्धुम्=युद्ध कर्तुं - रथेन सह वर्तत इति सरथः, अरिबृन्दे=शत्रुनिवहे, विवेश=अविशत् ॥

भावः ॥ इन्द्रजिन्मरणानन्तर मत्यल्प मात्मबलं निजसन्निधौ पुत्र मरणञ्च निशम्य रावणो विधिं निंदन्, शत्रुपराक्रम मभिनन्दन्, साध्व्या मन्दोदर्योक्तहितवाचम प्यविगणय्य, विजयाभिलाष श्श्रीरामेण योद्धुं रिपुबलेऽविशत् ॥

विशे ॥ अत्र - रघुकुलेन्दुप्रताप मभिनंदन्, इति रावणविशेषणेन तस्यौदार्यं संप्रशंस्यते - शत्रुपराक्रममपि प्रशंस न्नित्यनेन महापराक्रमवत इन्द्रजितोऽप्ययं जेता - अहो! तस्य पराक्रमगुण इति प्रशंसा - इन्द्रजिद्बल- प्रशंसा विवक्षिताऽपि श्रीरामबलप्रशंसाद्वारा प्रकटीक्रियते - तस्मा दत्र विवक्षि- तान्यपरवाच्यध्वनिः ॥

अथ ॥ रावणकृतलक्ष्मणमूर्छाप्रकार उपवर्ण्यते ॥

हीना न्निजासुभि रनूनाहते रधिकदीना न्विधाय स कपी
न्मानोद्धतप्लवगसेनान्वितौ तपनसूनू यदाऽभिद दुभौ ।
दून स्तत श्शरचये नासुरं रघुकुले नानुजोऽरथ दत
स्स्वेनोरुशक्तिहत मैनानुज न्दनुजनीनो ह्यमूर्छय दरम् ॥

---

खण्डा ॥ सः, कपीन्, अनूनाहतेः, निजासुभिः, हीनान्, अधिकदीनान्, विधाय, यदा, मानोद्धतप्लवगसेनान्वितौ, उभौ, तपनसूनू, अभिदत् - ततः, दूनः, रघुकुलेनानुजः, शरचयेन, असुरं, अरथत् - ततः, दनुजनीनः, अरं, ऐनानुजं, स्वेन, उरुशक्तिहतं, अमूर्छयद्धि ॥

व्याख्या ॥ हीना निति ॥ सः=रावणः, कपीन्=वानरान्, अनूनायाः =अनल्पायाः, आहतेः = घातात्, निजासुभिः = स्वप्राणैः, हीनान् = अपेतान्, अधिकदीनान्=अतिदैन्यवतश्च - विधाय=कृत्वा, यदा - मानेन = गर्वेण, उद्धताः = अधिकाः - तेच ते प्लवगाः - तेषां, सेना - तया - अन्वितौ=युक्तौ-मानोद्धतप्लवगसेनान्वितौ - उभौ=द्वौ, तपनसूनू=सूर्यवंशोद्भवौ रामलक्ष्मणौ - द्वितीया - अभिदत् = बिभेद - ततः - दूनः - तापितः, रघुकुलेनः=श्रीरामः, तस्य अनुजः=लक्ष्मणः - शरचयेन = बाणनिवहेन - आसुरं=असुरनिवहं - अनुदात्तादे रञ् - अरथत् = हिंसयाञ्चकार - अतः = तस्मात् - दनुजनयः=राक्षसाः - तेषां, मिनः=प्रभुः=रावणः - अरं=सत्वरं- ऐनानुजं=लक्ष्मणं - स्वेन=आत्मना, उरुशक्तेः, हतं - अमूर्छयद्धि = मोहमगमयत्किल ॥

भावः ॥ अथ रावण स्त्वायोधने प्रविश्य - कपीन् - राघवौच समधिकं जघान - यदाऽसुरा नि रेव मकरो त्तदा सौमित्रिरपि रावण मासुरं च पटुतर महन् - ततो रावणोऽतिरुषा स्वशक्त्यायुधेन लक्ष्मण माजा वमूर्छयत्किल ॥

अथ ॥ संजीविनीकृतलक्ष्मणमूर्छाऽपनयनप्रकारः ॥

धि क्त न्दशास्य मिति शक्तिक्षत न्त मतिभक्त स्समीक्ष्य हनुमा
न्द्रा क्तद्विमोहसुविमुक्तिप्रदौषधिसुसक्तानिलप्रसृतितः ।
मुक्तार्ति मुच्छ्वसनसक्तं विधाय बलयुक्त ञ्चकार स यदा
नक्तञ्चरास्वनिलमुक्तौ नृपो यतनयुक्तोऽभव त्सहि तदा ॥

---

खण्डा ॥ तं, दशास्यं, धिक् , इति, अतिभक्तः, हनुमान्, शक्तिक्षतं, तं, समीक्ष्य, द्राक् , तद्विमोहसुविमुक्तिप्रदौषधिसुसक्तानिलप्रसृतितः - यदा, मुक्तार्तिं, उच्छ्वसनसक्तं, विधाय, बलयुक्तं, चकार, तदा, सः, नृपः, नक्तञ्चरास्वनिलमुक्तेः, यतनयुक्तः - अभिवद्धि ॥

व्याख्या ॥ धि गिति ॥ तं, दशास्यं=रावणं, धिक् , इति = इत्थं, अतिभक्तः=भक्ताग्रेसरः, हनुमान्, शक्त्याक्षतं, तं = लक्ष्मणं, समीक्ष्य = दृष्ट्वा, द्राक्=द्रुतं, तस्य यो विमोहः - तस्य, सुष्ठु विमुक्तिप्रदा यौषधिः; तया सुसक्तः योऽनिलः - तस्य प्रसृतितः=प्रसारात् - संजीविन्यौषध्यनिल प्रसारात् - यदा=यस्मि न्समये - मुक्ता आर्ति र्येन सः = तं, मुक्तार्तिं - उच्छ्वसनसक्तं=उच्छ्वासयुक्तं - विधाय=कृत्वा, बलयुक्तं=सामर्थ्यवन्तं - चकार - तदा, सः, नृपः=श्रीरामः - नक्तञ्चरस्य=रावणस्य, अस्वनिलानां = प्राणानिलानां-मुक्तेः=मोक्षस्य, यतनयुक्तः=प्रयत्नयुक्तः - अभिवद्धि ॥

भावः ॥ तत स्स हनुमान् - धि ग्दशास्य मिति वदन् त म्मूर्छितं लक्ष्मणं निरीक्ष्य भक्त्या द्रुत ङ्गत्वा संजीविनीलता मानीय याव त्त न्तदनिल-प्रसृत्यात्तचैतन्यं व्यधा त्ताव च्छ्रीरामोऽपि रावणासुरासुहरणे प्रयत्नवा न्बभूव ॥

अथ ॥ श्रीरामकृतसंगरपद्धतिः ॥

**योध स्समीक्ष्य रघुनाथ स्तदा विशिखबाधानुपेत मनुजं**
**क्रोधाद्धि तद्दनुजनाथेन योद्धु ममराधीशदत्तसुरथम् ।**
**सोऽथाधिरुह्य कपियूथान्वित स्समरवीथीं विलोक्य सरिपु**
**म्बाधाकरा न्सुरविरोधिव्रजेऽक्षिप दगाधोरुशक्तिमदिषून् ॥**

---

खण्डा ॥ तदा, योधः, सः, रघुनाथः, विशिखबाधानुपेतं, अनुजं, समीक्ष्य, अथ, क्रोधात्, तद्दनुजनाथेन, योद्धुम्, अमराधीशदत्तसुरथं-अधिरुह्य, कपियूथान्वितस्सन्, सरिपुं, समरवीथीं, विलोक्य, बाधाकरान्, अगाधोरु शक्तिमदिषून्, सुरविरोधिव्रजे, अक्षिपत् ॥

व्याख्या ॥ योध इति ॥ तदा = लक्ष्मणेन कृताहवसमये - योधः = युद्धनिपुण इति यावत् - सः, रघुनाथः = श्रीरामचन्द्रः - विशिखबाधया, अनुपेतं = अपेत मित्यर्थः - अनुजं = सोदरं लक्ष्मणं - समीक्ष्य = दृष्ट्वा, अथ = ततः- क्रोधात् = कोपात् - तद्दनुजनाथेन = रावणेन सह - योद्धुम् = युद्धं कर्तुं - अमराधीशेन = शक्रेण, दत्तं - शोभनं रथं - अधिरुह्य, कपियूथेन = वानरबृन्देन - अन्वितस्सन् = युक्तस्सन्, सह रिपुणा वर्तत इति - सरिपुं, समरवीथीं = युद्धभूमिं - विलोक्य = दृष्ट्वा, बाधाया आकरा नितिवा बाधां कुर्वन्तीति वा विग्रहः - अगाधा उरुशक्ति रेषा मस्ती त्यगाधोरुशक्तिमन्तः - तेच ते इषवश्चेति तान् - बाणान् - सुरविरोधिव्रजे = असुरसंघे, अक्षिपत् = पातयामास- क्षिप प्रेरण इति धातो लङ्रूपम् ॥

भावः ॥ तदनु श्री रामोऽपि बाणप्रहारबाधाऽपेत मनुजं दृष्ट्वा - क्रोधादसुरपतिना योद्धुं शक्रप्रहितरथ मारुह्य कपिभि रन्वितो रणांगणं वीक्ष्य राक्षसव्रजेऽपारशक्तिमद्बाणप्रक्षेपण मकरोत् ॥

अव ॥ अथ रावणसंहारः कथ्यते ॥

**योऽवाह नासुर मथाऽवेशितो रघुवरो विस्मितोऽसुरविभु**
**र्धावद्धिया युधि त मावेजय त्त्वसकृदे वोद्भवन्निजशिरैः ।**
**याव त्परस्पर मुभा वस्त्रसन्ततिभि रावाहता म्पटुतर**
**न्ताव न्नृपो द्रुहिणदेवास्त्र मास्य युधि देवारिजीव महरत् ॥**

खण्डा ॥ अथ, आवेशितः, यः, रघुवरः, आसुरं, अवाहन्, असुरविभुः, विस्मितस्सन्, धावद्धिया, तं, हरिं, असकृदेव, उद्भवन्निजशिरैः-युधि, यावत्, उभौ, परस्परं, अस्त्रसन्ततिभिः, पटुतरं, आवाहतां - तावत्, नृपः, युधि, द्रुहिणदेवास्त्रं, आस्य - देवारिजीवं - अहरत् ॥

व्याख्या ॥ य इति ॥ अथ=ततः, आवेशितः = क्रोधावेशवान्, यः, रघुवरः = श्रीरामचन्द्रः - असुराणां समूहः - त मासुरं, यदा - अवाहन् = जघान - तदा-असुरविभुः=रावणः - विस्मितस्सन्, धावद्धिया=व्यग्रमनसा, तं, हरिं = रामं - असकृदेव = पौनःपुन्येन - उद्भवन्तश्च ते निजशिराश्च - उद्भवन्निजशिराः - नि ॥ शिरोऽदन्त शिरोवाची रजोवाची रज स्तथा-इत्यमरः- तैः आवेजयद्भि - आ - समन्तात्, अवेजयत् - वेजृ कंपन इति धातुः - कंप यामास किल - यावत् - उभौ=रामरावणौ, परस्परं=अन्योन्यं-अस्त्रसंततिभिः =वारुणवैश्वानरादिभिः परस्परोपशान्तिदै रित्यर्थः - पटुतरं=सुदृढं, आवाहतां- तावत् - नृपः=श्रीरामः - युधि=समरे, द्रुहिणदेवस्य ब्रह्मणः, अस्त्रं - ब्रह्मास्त्र मिति यावत् - आस्य - आङ्पूर्वकः असु क्षेपणे इति धातो र्दैवादिकः - तस्मा ल्ल्यप् - प्रयुज्येत्यर्थः - देवारिजीवं - रावणासून्, अहरत् - रावणं मारयामासेति भावः ॥

भावः ॥ अथ श्रीराम स्सोद्वेगं राक्षसगणं यदाऽवधी त्तदै वासुरविभु शिरोभिः पौनःपुन्ये नोद्भवद्भी रामं व्याकुल मकरोत् - एव मुभौ परस्परविभि न्नास्त्रै रायोधनं कुर्वतो स्तयो रन्यतरो रामो रावणं ब्रह्मास्त्रेण गतासु मकरोत् ॥

अथ ॥ देवताकृतश्रीरामाभिनुति रुपपाद्यते ॥

नो मोदकृ त्स रघुरामः किले त्यसुरनामावशेषतुषिताः
रामे तदा सुरललामा ववर्षु रविरामं सुरद्रुकुसुमैः ।
सामोक्तिभि र्दनुजभूमीशभ्रातु रधिका मार्तिम प्यपनयन्
रामो मृतान्त्यकृतिकामं विधाय रिपुभामार्तिशान्ति मकरोत् ॥

खण्डा ॥ तदा, सः, रघुरामः - नः, मोदकृत्, किल, इति, असुरनामावशेषतुषिताः, सुरललामाः, सुरद्रुकुसुमैः, अविरामं, रामे, ववर्षुः - रामः, अपि, सामोक्तिभिः - दनुजभूमीशभ्रातुः - अधिकां, आर्तिं, अपनयन्, मृतान्त्यकृतिकामं - विधाय - रिपुभामार्तिशान्तिं, अकरोत् ॥

व्याख्या ॥ न इति ॥ तदा=रावणमृतिकाले, सः=योऽयं रावण मवधी त्स इति पूर्वपरामर्शः - रघुरामः=श्रीरामः - नः=अस्माकं, मोदं करोतीति - मोदकृत् - किल - इति=एवं - असुरनाम्नः - रावण इति नाम्नो वा - अवशेषेण=शब्दमात्रावशेषेण, तुषिताः=तोष कृताः - सुरललामाः=देवश्रेष्ठाः - सुरद्रुकुसुमैः=कल्पतरुप्रसूनैः - अविरामं=अविश्रान्तं - अविरळ मिति यावत् - रामे - अत्राभिव्यापकसप्तमी - राम मभिव्याप्येति भावः - ववर्षुः=पुष्पवृष्टि श्चक्रुः-रामोऽपि=श्रीरामोऽपि, सामोक्तिभिः=सात्त्विकवचनैः - दनुजभूमीश भ्रातुः=विभीषणस्य - अधिकां, आर्तिं=व्यथां - अपनयन्; मृतस्य - अन्त्यकृतौ, कामः अस्यास्तीति तथोक्तं, विधाय=कृत्वा, रिपुभामायाः=मन्दोदर्याः, आर्तेः, शान्तिं=शमनं - अकरोत् ॥

विशे ॥ अहन् - आसुर मित्यत्र - सू ॥ ङमो ह्रस्वा दचि ङमु ण्नित्य- मित्यनेन नकारद्वित्व स्यावश्यंभावित्वेपि, "नित्यवीप्सयो" रित्यत्र भाष्ये - नित्यपद स्याभीक्ष्ण्यवाचित्वेन - नित्यप्रहसितः - नित्यप्रजल्पित इत्यादाविव प्राय स्समानार्थकत्वं व्यवस्थापितं - अत एव-तिङ्ङतिङः; तस्मि न्नणि च- इत्यादिषु ङ्मुडागमः कृतः - सुप्तिङन्तं; सनाद्यन्ताः-इत्यादौ न कृतः - सन्नन्ता न्न स निष्यते-इत्यत्र द्वेधा वर्तते-तस्मा दत्र द्वित्वाभावेपि न दोष इत्यलं बहुधा ॥

अव ॥ अथ विभीषणराज्यदानं - सीताप्रतिग्रहण श्चोपवर्ण्यंते ॥

प्रद्योतनान्वयसुविद्योतक स्त मनवद्यं विभीषण मरं
हृद्ये सुरारिपनिषद्ये पदे विविधवाद्यै निवेश्य कपिभिः ।
वेद्या सतीय मनवद्या जनै रिति महोद्यद्भुताशनमुखा
त्सद्योऽवबुध्य निरवद्यां कृशानु मभिवा द्याग्रही त्स्वरमणीम् ॥

---

खण्डा ॥ प्रद्योतनान्वयसुविद्योतकः, अनवद्यं, तं, विभीषणं, अरं, हृद्ये, सुरारिपनिषद्ये, पदे, विविधवाद्यैः - कपिभिः, निवेश्य, इयं - अनवद्या, सती, वेद्या, इति, सद्यः, महोद्यद्भुताशनमुखात् - निरवद्यां, अवबुध्य, कृशानुं, अभिवाद्य, स्वरमणीं - अग्रहीत् ॥

व्याख्या ॥ प्रद्योतन इति ॥ प्रद्योतनस्य = सूर्यस्य, नि ॥ प्रद्योतनो दिनमणिः खद्योतो लोकभान्धव - इत्यमरः - अन्वयः = वंशः - तस्य, सुविद्योतकः = सुप्रकाशक श्श्रीरामः, अनवद्यं = अनिंदितं, तं, विभीषणं, अरं = द्रुतं - हृद्ये = मनोहरे, सुरारीन् पातीति सुरारिपः = राक्षसप्रभुः - तस्य - निषद्ये = स्थातुं - योग्ये, पदे = स्थाने, नि ॥ पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुष्विति विश्वः - विविधवाद्यैः = नानाविधातोद्यै स्सह, कपिभिः = वानरैः - करणे तृतीया - निवेश्य = स्थापयित्वा, इयं, = सीता - अनवद्या, = अनिंद्या, सती = रमणी, वेद्या = ज्ञेया इति - सद्यः = सपदि, महान् - उद्यतः = उज्ज्वल श्चासौ हुताशनः = अग्निश्चेति = महोद्यद्भुताशनः - तस्य, मुखात्, अवबुध्य = विज्ञाय - कृशानुं = वैश्वानरं, अभिवाद्य = प्रणम्य, निरवद्यां = अनिंदितां - स्वरमणीं = आत्मनः पत्नीं - अग्रहीत् ॥

भावः ॥ अथ श्रीराम स्त मनवद्य विभीषणं राक्षसविभुपदे निवेशयित्वा - इय न्तव सती निरवद्या ज्ञेया - इति वदतो महोज्ज्वलाग्निमुखा न्निजरमणी मनिंदितां विज्ञा याग्नि मभिवाद्याग्रहीत् ॥

---

भावः ॥ रावणहरणानन्तरं रामे पुष्पवृष्टिं सुरगणा ववर्षुः - तत श्श्रीरामोऽपि भ्रातृवधा द्दुःखितं विभीषणं रावणान्त्यकर्मकरणाय प्रेर्य - तस्य - रावण दाराणा न्चार्तिशान्ति मकरोत् ॥

अथ ॥ अयोध्यामार्गे भरद्वाजाश्रमप्रवेशः ॥

**चोरासुरापहृतदारा मयोऽकृतविकारां प्रपूतचरिता**
**न्नारी ष्वशेषसुरवारेडिता मनल मारा दवाप्य स तया ।**
**वारे विमानवर मारुह्य वानरसुवीरै स्सहानुजयुत**
**स्स्वैरं स्तुव न्विमलचारित्र मीक्षितु मुदार न्तपस्विन मगात् ॥**

---

खण्डा ॥ चोरासुरापहृतदारां, अयोऽकृतविकारां, नारीषु, प्रपूतचरितां, अशेषसुरवारेडितां - अनलं, आरात् - अवाप्य, सः, वारे, तया, विमानवरं आरुह्य, वानरसुवीरै स्सह, अनुजयुतः स्वैरं, विमलचारित्रं, स्तुवन्, उदारं, तपस्विनं, ईक्षितुं, अगात् ॥

व्याख्या ॥ चोरासुर इति ॥ चोरासुरेण = रावणेन, अपहृतां, दारां, अयसा = अग्निना - "अयाश्च उद्गाता; अयसा मनसा हव्यमोहिषे; अयसे अग्नय इद" मित्यादिश्रुति ष्वयसोऽग्निविशेषणत्वे योगरूढः - तेनाग्निनाऽकृतः=अप्राप्तः विकारः यस्या स्सा - तथोक्तां - यद्वा - अयः, अकृतविकारामिति व्यवस्थितेः - अय इत्यव्ययस्य - नि ॥ अय श्शुभावहो विधि रिति कोशपर्यालोचनया - शुभावहार्थकत्वेन - शुभावहेन विधिना-अकृतविकारां= अप्राप्तविकारा मित्यर्थः - एवंच शुभा दनपेता मिति भावः - नारीषु=सतीषु प्रपूतं चरितं यस्या स्ता न्तथोक्तां - अशेषसुरवारेण=निखिलगीर्वाणबृन्देन - ईडितां=नुतां - सीतां - अनल मारात्=अग्निसविधे - अवाप्य = प्राप्य, सः,=रामः-वारे=अवसरे, तत्क्षण इति यावत् - तया=जायया - विमानवरं =पुष्पकविमानं, आरुह्य, वानरसुवीरै=जांबवदंगदहनुमत्सुग्रीवादिभि र्युक्त - स्सन्, अनुजेन=लक्ष्मणेन, युतः = संयुक्तः - स्वैरं = यथेच्छं - विमलानि चारित्राणिच यस्मि न्तं - यद्वा विमलञ्च त च्चारित्रञ्च-तत्, स्तुवन्=स्तोत्रं कुर्वन् - उदारं=औदार्यसरलस्वभावयुक्तं - तपस्विनं=भरद्वाजनामान म्महर्षिं- ईक्षितुं=द्रष्टुं - अगात्=जगाम ॥

भावः ॥ रावणापहृतसीता मयसाऽकृतविकारां पूतचरितां देवताभिनुता मादाय, तया सह विमाने आरुह्य वानरै रनुजेनसहान्वितो भरद्वाजमुनि चरित्रं स्तुव न्तदाऽऽश्रम माविवेश ॥

अव ॥ भरद्वाजानुज्ञात श्श्रीराम स्सपरिवारोऽयोध्या मविशत् ॥

दक्षोऽतिदुष्टजनशिक्षाविधौ नृपति रक्षीणशौर्यललितो
रक्षोऽधिराड्ढनुमदृक्षाधिपार्कजनिवृक्षाटनानुजयुतः ।
दीक्षान्वितानुजनि मीक्षाञ्चकार जनरक्षापरायण मथो
वीक्षारतात्मजनताक्षिप्रमोददकटाक्षः पुरं स्व मविशत् ॥

---

खण्डा ॥ अतिदुष्टजनशिक्षाविधौ, दक्षः, नृपतिः, अक्षीणशौर्यललितः, रक्षोधिराड्ढनुमदृक्षाधिपार्कजनिवृक्षाटनानुजयुतस्सन्, दीक्षान्वितानुजनिं, जन रक्षापरायणं, ईक्षाञ्चकार - अथो, वीक्षारतात्मजनताक्षिप्रमोददकटाक्षः - स्वं- पुरं - अविशत् ॥

व्याख्या ॥ दक्ष इति ॥ अत्यन्तं दुष्टजनाः = अतिदुष्टजनाः - तेषां - शिक्षाविधौ =शिक्षाकर्मणि - दक्षः =समर्थः - नृपतिः=श्रीरामः - अक्षीणशौर्येण =अमितपराक्रमेण, ललितः=सुन्दरः - रक्षसां अधिराट् = राजा विभीषणः - तेन, हनुमांश्च, ऋक्षाधिपश्च=जांबवांश्च - अर्का ज्जनि र्यस्य सः=सुग्रीवश्चेति ये वृक्षाटनाः=कपयः - तैः, अनुजेन=लक्ष्मणेन च, युतस्सन्=युक्तस्सन्, दीक्षा न्वितः=अयोध्यानगरीं न प्रवेक्ष्यामीति जटावल्कलधरणदीक्षयाऽन्वितः - स चासौ अनुजनिः=भरतः - सचेति कर्मधारयः - तं - जनरक्षापरायणं=अरण्य- वाससमये स्वात्मनः प्रतिनिधित्वेन भूपालने - जनरक्षणेच तात्पर्ययुक्तं - भरतं ईक्षाञ्चकार=अपश्यत् - अथो = अथ - नि ॥ अथाथो संशये स्याता मधिकारे च मंगळे, विकल्पानन्तरप्रश्नकार्त्स्न्यारंभसमुच्चये - इति मेदिनी - वीक्षायां रता, या, आत्मजनता-तस्याः, अक्ष्णां प्रमोदं ददतीति तथोक्ताः,-कटाक्षाः यस्य सः श्रीरामः - स्वं =नैजं - पुरं =अयोध्यानगरं - अविशत् ॥

भावः ॥ तदनु भरद्वाजानुज्ञात श्श्रीरामो विभीषणेत हनुमज्जांबवत्सुग्री वांगदादिकपिभि रनुजेन चान्वितो दीक्षास्थितं भरतं वीक्ष्य स्वदिदृक्षूणां प्रमोदक स्स (कास) न्नयोध्यापुरी मविशत् ॥

अथ ॥ श्रीरामपट्टाभिषेकः कथ्यते ॥

यावत्प्रविवेश पुर मावेद्य तद्विभुगतावार्यशौर्य मनघं
तावद्वशिष्ठमुनि रेवाय मीशपद मावेश्यता मिति वदन् ।
सौवर्णपात्रनिचयावासिताच्छपयसाऽऽवर्षितैनमुकुटं
त्वाबाह्य त म्मनुजदेवासने स मुनिदेवोऽभ्यषिंच दिनजम् ॥

खण्डा ॥ यावत् पुरं, विवेश, तावत्, वशिष्ठमुनिः, अनघं, तद्विभुग तावार्यशौर्यं, आवेद्य, अयं, एव, ईशपदं, आवेश्यतां, इति, वदन्, सौवर्ण-पात्रनिचयावासिताच्छपयसा, आवर्षितैनमुकुटं - तु, आबाह्य, सः, मुनिदेवः-इनजं - तं, मनुजदेवासने - अभ्यषिंचत् ॥

व्याख्या ॥ याव दिति ॥ यावत् - पुरं = अयोध्यानगरं, विवेश = अविश द्रामः - तावत् - वशिष्ठमुनिः=इनकुलगुरु र्महर्षिः - अनघं=पापवि-दूरं, स चासौ विभुश्चेति तद्विभुः - तं, श्रीरामचन्द्रं - गत मवार्यशौर्यं, श्रीरामनिष्ठबलपराक्रमं, आवेद्य = समन्ततो विदित्वा - अयमेव = श्रीराम एव, ईशपदं=राजपदं - आवेश्यतां=विनिवेश्यतां, इति=इत्थं - वदन् = ब्रुवन् - सौवर्णपात्राणां निचयः - तस्मि न्नावासितं, अच्छञ्च त त्पयश्च - सौवर्णपात्रनिचया वासिताच्छपयः=हेमकुंभानीतपवित्रजलं - तेन - आवर्षितं = सेचनीकृतं - इनस्य मुकुटं=ऐनमुकुटं - आवर्षितं ऐनमुकुटञ्चेति कर्मधा-रयः-त म्मुकुटन्तु, आबाह्य=धारयित्वा, सः, मुनिदेवः=ऋषिश्रेष्ठो वशिष्ठः-इनजं= प्रभुपुत्रं=दशरथपुत्रं ज्येष्ठं, तं-श्रीरामं, मनुजदेवासने=राजसिंहा सने - अभ्यषिंचत् =अभिषिक्तवा नित्यर्थः ॥

भावः ॥ यदाहि श्रीराम अयोध्या मविश त्तदा गुरुः वशिष्ठ श्श्रीराम-तन्माहिमान श्चावेद्य - अयमे वाहीराज्यभारं वोढु मिति जना नुद्घोषय न्सुवर्ण-कुम्भेषु गंगादिनदीजल मानूय तेन वारिणा राजमुकुटधारणपूर्वक मयोध्याधि पत्ये राम स्याभिषेक श्चकार ॥

अथ ॥ श्रीरामराज्यपालनपद्धतिः ॥

ताराम्रुतार्कजसमीरात्मजातमुखवीरा न्कृपान्वितदृशा
शूरो मुदा स्वजनवारा न्स्वकीयपरिचारा ननुग्रहहृदा ।
धीरानुजा न्सुहृदुदारांश्च हार्दयु गपारप्रियं परिमृश
न्स्वारा ण्णिजा न्दिव मि वेरासतीं रघुकुमारो ररक्ष कुशलम् ॥

खण्डा ॥ शूरः, रघुकुमारः, तारासुतार्कजसमीरात्मजातमुखवीरान् कृपान्वितदृशा, स्वजनवारान्, मुदा, स्वकीयपरिचारान्, अनुग्रहहृदा, धीरानुजान्, सुहृदुदारांश्च, हार्दयुक्, अपारप्रियं, परिमृशन्, स्वाराट्, निजां, दिवं, इव, इरासतीं, कुशलं - ररक्ष ॥

व्याख्या ॥ तारासुत इति ॥ शूरः=पराक्रमवान्, रघुकुमारः=श्रीरामचन्द्रः, तारासुतश्च=अंगदश्च, अर्कजश्च = सुग्रीवश्च, समीरात्मजातश्च = हनुमांश्चेत्येते मुखे येषा न्तान्, कृपया अन्विता दृक् - तया - स्वजनवारान् =स्वबंधुजनसमूहान्, मुदा=सन्तोषेण, स्वकीयपरिचारान् = आत्मभृत्यवर्गान्, अनुग्रहहृदा=सानुग्रहमनसा - प्रसन्नचित्ते नेत्यर्थः - धीराश्च ते अनुजाश्चेति विग्रहः - तान्, उदाराश्च ते सुहृदश्च=सुहृदुदारा इति विशेष्यपूर्वपद कर्मधारयः-तांश्च-हार्दयुक्=प्रेमयुतः-नि॥ प्रेमानाप्रियते हार्दं प्रेम स्नेहोऽथ दोहद मित्यमरः - अपारप्रियं परिमृशन् = तेषां क्षेमादिकं विचारयन्, स्वाराट्=इन्द्रः, निजां स्वीयां - दिवमिव = त्रिदशालयमिव - इरासतीं = भूरमणीं-कुशलं=मंगळं यथा भवति तथा, ररक्ष=पालयामास ॥

भावः ॥ श्रीरामचन्द्रः पराक्रमोपेतः - अंगदसुग्रीवहनुमदादिकपीन् दयाकटाक्षैः - आत्मबन्धू न्प्रमोदेन, निजसेवका न्प्रसन्नचित्तेन, भ्रातॄन् हृदश्च प्रेम्णा परामृशन्, शतमख स्स्वर्गमिव कोसलराज्यं ररक्षातिकुशलम् ॥

विशे ॥ अन्तेमंगळार्थिकस्य कुशलशब्दस्य प्रयोगा न्मंगळांतत्वं काव्यस्य ॥
गद्य ॥ इति श्रीमद्भयानन पादारविन्दवरिवस्यासादितोभय-
कवितावता, श्री मल्लङ्कोपनामक श्री शिवराम
शास्त्रितनूभवेन, श्री सीताराम शास्त्रिणा
विरचिते, तत्त्वबोधिन्याख्यव्या-
ख्योपेते श्रीसीतारामायणे
युद्धकांडः समाप्तः ;
श्रीसीतारामायणञ्च समाप्तम्

---

## मुद्रण प्रमाद संस्करण पत्रिका -

| पत्रम् | पङ्क्तिः | दोषः | ग्राह्यः |
|---|---|---|---|
| iv | १९ | अहन् | अहम् |
| १ | ९ | आह्ययति | आह्वयति |
| ,, | १२ | पंकाकरम् = | पंकाकरः = |
| ५ | २३ | वञ्छा | वाञ्छा |
| ८ | २४ | मगुरुदेवं | त्मगुरुर्देवं |
| ९ | २४ | मघमर्पणा - | मघमर्षणा - |
| १० | ८ | सर्गप्रदमे | सर्गप्रदे |
| १२ | ५ | वासुमाप | वासमाप |
| १३ | ४ | जनिसमन्दांशु | जनिममन्दांशु |
| १८ | १५ | = तेजसः | = तेजः |
| ,, | २१ | कृपालेक्लेशनेद् | कृपालेशेनेद् |
| २१ | १ | श्रीरामप्रेषणेऽति | श्रीरामं प्रेषयेति |
| ,, | ३ | प्राब्ध ... त्वयायात | प्रारब्ध ... त्वयात |
| ,, | ७ | असुरातियोग | असुरारातियोग |
| २२ | १९ | मवलिति | मवत्विति |
| २७ | १४ | कुतोद्वाहाः | कृतोद्वाहाः |
| ३४ | ११ | अभिलाषितम् | अभिलषितम् |
| ४१ | ५ | गतापायिता | गताप्रायता |
| ४३ | २६ | वाच्यया | वाच्यया |

| | | | |
|---|---|---|---|
| ४४ | २ | मेदेन | मोदेन |
| ,, | ४ | मेदा | मोदा |
| ५५ | ४ | समाप्यं | समाप्य |
| ६० | ३ | दुर्मृकुला | दुर्मृगकुला |
| ६१ | १० | रक्षस्स्त्रीः | रक्षस्स्त्री |
| ६२ | ५ | गुच्छऽसुरा | गुच्छाऽसुरा |
| ,, | | आत्मनोभ्रातुः | आत्मनोभ्रातुः |
| ७४ | १८ | रखुशूरः | रघुशूरः |
| ७६ | १५ | पिशाचादे | पिशाचादौ |
| ,, | | च, पलानि | चपलानि |
| ८२ | ५ | शबर्येतिधि | शभर्येतिथि |
| ८३ | २० | अतिधिः | अतिथिः |
| ९२ | १८ | प्रधमः | प्रथमः |
| ,, | १५ | वैयर्ध्यं | वैयर्थ्यं |
| ९३ | २० | योद्दु | योद्धु |
| ९६ | २ | कुथा | कुधा |
| २०५ | २५ | स्कंधदांतरित | स्कंधांतरित |
| १०६ | १९ | सबेदन ... दुर्बलं | सुवेदन ... दुर्बले |
| १०९ | १२ | रावणेनत्तं | रावणेनाचं |
| १११ | १६ | श्रीरामसुता | श्रीरासुता |
| १२९ | १५ | अग्रच ... स्वपुत्रेषश्रेष्ठ | अग्रंच ... स्वपुत्रेपुश्रेष्ठं |
| १३१ | १९ | यथार्थ्यं | याथार्थ्यं |
| १३६ | १५ | क्षेतेः | क्षितेः |
| १४० | ६ | विनयीः | विनयी |
| १४७ | ५ | हठा | न्यधा |
| ,, | ८ | हठात् | न्यधात् |
| १५९ | ७ | असुरं | आसुरं |
| १६३ | २३ | तिङ्सिङः | तिङ्स्तिङः |
| १६८ | ८ | हार्दयुन्...परिमृशक् | हार्दयुक्...परिमृशन् |